# अद्वैतसिद्धान्तवैजयन्ती

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादपूज्य-

चरणानुग्रहलब्धब्रह्मविद्यावैशद्येन श्रीमद्ब्रह्मानन्द-

सरस्वतीसारस्वतसाम्राज्यानुभवसमेधमानयुक्ति-

शतधारोत्सारितविपक्षगिरिनिचयेन

**भट्टत्र्यम्बकशास्त्रिणा**

विरचिता ।

**श्रीरङ्गस्थ**

**श्रीवाणीविलासमुद्रायन्त्रालये**

संमुद्रिता ।

१९१६.

Published under the Esteemed Patronage

OF

HIS HOLINESS SRI CHANDRASEKHARA BHARATI SWAMIGAL

(The Jagadguru of Sringeri)

# ADVAITASIDDHANTA VAIJAYANTI

BY

SRI TRYAMBAKA SASTRI.

SRIRANGAM:

SRI VANI VILAS PRESS.

1916.

# अद्वैतसिद्धान्तवैजयन्ती

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादपूज्य-
चरणानुग्रहलब्धब्रह्मविद्यावैशद्येन श्रीमद्ब्रह्मानन्द-
सरस्वतीसारस्वतसाम्राज्यानुभवसमेधमानयुक्ति-
शतधारोत्सारितविपक्षगिरिनिचयेन

भट्टत्र्यम्बकशास्त्रिणा

विरचिता ।

श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रिता ।
१९१६.

# अद्वैतसिद्धान्तवैजयन्ती

वन्दे वन्दारुमन्दारमिन्दिरानन्दमन्दिरम् ।
वृन्दावनचरं भक्तवृन्दावनपरं महः ॥ १ ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥ २ ॥

नत्वा श्रीभगवत्पादपादपाथोरुहद्वयम् ।
करोम्यद्वैतसिद्धान्तवैजयन्तीं सतां मुदे ॥ ३ ॥

इह खलु परमपुरुषार्थसाधनमात्मतत्त्वज्ञानमामनन्ति न्यायवेदान्तनिष्णाताः। तच्चात्मतत्त्वं कर्तृत्वभोक्तृत्वादिनिखिलानर्थविरहितसच्चिदानन्दघनप्रत्यगभिन्नब्रह्मात्मकमिति तन्निरूपणीयम् । निरूपणं च साधकप्रदर्शनबाधकनिराकरणाभ्याम् । तत्र च साधिकाः— 'असंगो ह्ययं पुरुषः' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सदेव सोम्येदमग्र आसीत्' 'नेह

नानास्ति किंचन' 'नात्र काचन भिदास्ति' 'तत्त्वमसि' इत्यादयो निश्चिततात्पर्यका: उपनिषद एव । तत्र च निश्चितप्रामाण्यकप्रमाणान्तरविरोधे तात्पर्यानिश्चयात् तदविरोधस्तावत् उपपादनीय: । स च यावत्प्रत्यक्षादिग्राह्यद्वैतजातस्य पारमार्थिकत्वं न निराक्रियते तावत् दुरुपपाद इति तस्य मिथ्यात्वमुपपादनीयम् । अतस्तदेवादौ स्वपक्षसाधनाद्युपन्यासेन प्रपञ्च्यते ॥

तथा हि– तत्र विप्रतिपत्ति:, *ब्रह्मप्रमातिरिक्ताबाध्यं सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं मिथ्या न वा विमतं मिथ्या न वा इत्यादि । अत्र च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन साध्यसिद्धावपि सिद्धसाधनमिति मते शुक्तिरूप्यादौ तद्वारणाय अबाध्यान्तं पक्षविशेषणम्, तुच्छे ब्रह्मणि च बाधवारणाय अर्हान्तभिन्नान्ते । उक्तं हि दीधितिटीकायाम्— 'अत एवातिप्राचीना अवच्छेदकावच्छेदेनानुमितावप्यंशत: सिद्धसाधनस्य दोषत्वमङ्गीकुर्वन्तो ध्वनिव्यावर्तनाय शब्दानित्यत्वानुमाने वर्णात्मकत्वं पक्षे निवेशयन्ति' इति । यदि च पक्षतावच्छेदकावच्छेदेन

---

* तेन विप्रतिपत्तिधर्मितावच्छेदकस्यैवानुमाने पक्षतावच्छेदकत्वमुचितमिति शङ्कावकाशो नास्तीत्यर्थ: ।

साध्यसिद्धेरुद्देश्यत्वे तत्सामानाधिकरण्येन साध्यसिद्ध्या न सिद्धसाधनमिति नव्यमतमाद्रियते, तदा तथोद्देश्यतायाम् अबाध्यान्तं नोपादेयमेव । इतरविशेषणद्वयं तुच्छे ब्रह्मणि च बाधवारणायोपादेयम् । तत्सामानाधिकरण्येन तथात्वे तु उक्ताबाध्यत्वमात्रं पक्षविशेषणम् ॥

यद्यपीदं सिद्धसाधनमुद्भावनीयं न माध्वेन नापि वैशेषिकादिना, शुक्तिरजतादौ माध्वेनालीकत्वस्य, तार्किकैः पारमार्थिकत्वस्यैव अभ्युपगमात्; प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिमात्रस्य साध्यतायां तस्य शुक्तिरजतादौ माध्वैरभ्युपगमेऽपि ब्रह्मप्रमातिरिक्ताबाध्यत्वस्यापि तत्र तैरभ्युपगमेन सिद्धसाधनानुद्धारात्, सत्तादात्म्यपर्यवसितस्य सत्त्वेन प्रतीत्यर्हत्वस्यापि तद्व्यावर्तकत्वाच्च । तथापि शुक्तिरजतादेः अनिर्वाच्यतावादितान्त्रिकैकदेशिना सह विवाद एवाबाध्यान्तस्य पक्षविशेषणत्वानुसरणात् नासंगतिः ॥

न चैवमपि ब्रह्मण्यारोपिते क्षणिकत्वादौ सिद्धसाधनं दुर्वारम्, तस्य क्षणिकत्वाभावप्रकारकब्रह्मज्ञानबाध्यतया ब्रह्मप्रमातिरिक्ताबाध्यत्वसत्त्वादिति वाच्यम्, तस्य ब्रह्मान्यविषयकज्ञानाबाध्यत्वरूपपर्यवसितपक्षविशेषणशून्यत्वेन तद्दोषानवकाशात् । न च तथापि मूलाविद्यानिवर्तकब्रह्मज्ञानान्य-

वहितपूर्ववृत्तिप्रातिभासिकविशेषे सिद्धसाधनमशक्यवारण-मिति शङ्क्यम्, अबाध्येत्यन्तेन ध्वंसस्तादृशज्ञानं* चेत्यन्य-तरजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तान्यत्वस्य विवक्षितत्वात् । परैश्च भ्रमजनकाज्ञानस्य अनिर्वाच्यत्वानभ्युपगमात्, उक्त-विशेषणस्य तत्साधारण्येऽपि न क्षतिः । ज्ञाननि-वर्त्यत्वरूपमिथ्यात्वस्य साध्यतायामुक्तान्यतरजन्यध्वंसप्रति-योग्यज्ञानभिन्नत्वे सति तत्प्रयुक्तान्यत्वं पक्षविशेषणम् । तेन शुक्तिरूप्याद्यारोपकारणीभूताज्ञानादौ न सिद्धसाधनम् । उक्तप्रातिभासिकविशेषप्रयोजकाज्ञानं च न ब्रह्मज्ञाननाश्यम्, तदसमानविषयकत्वात्, किं तु जीवेशभेदाद्यनाद्यन्तरवत् मूलाज्ञाननाशनाश्यमेव ॥

न चैवमज्ञानस्य स्वसमानविषयकतत्त्वज्ञाननाश्यता-नियमो न स्यात्, उक्ताज्ञान एव व्यभिचारादिति वाच्यम्, तादृशप्रातिभासिकविशेषस्य प्रामाणिकत्वे उक्त-रीत्या व्यभिचारवारणाय तत्तदज्ञानान्यत्वस्यापि नाश्यता-वच्छेदकोटौ निवेश्यत्वात् इति । अधिकमन्यत्र विवेचितम् । संप्रदायविदस्तु क्षणिकत्वादेरतीन्द्रियपदार्थघटितत्वेन अती-न्द्रियतया परोक्षे अन्यथाख्यातेरभ्युपगमेन च न क्षणिक-

---

* ब्रह्मान्यविषयकमित्यर्थः ।

वादि प्रातिभासिकमित्याहुः । देहात्मैक्यादिकं च न तान्त्रिकानुयायिमतेऽनिर्वाच्यम्, तेन अहं मनुष्य इत्यादिज्ञानस्य अप्रामाण्यानभ्युपगमादिति न तत्र सिद्धसाधनं शङ्क्यम् ॥

यत्तु शुद्धं ब्रह्म वृत्तिविषयोऽपि न– इति मते वियदादेरपि ब्रह्मप्रमान्यबाध्यतया* पक्षालाभ इति, तन्न, तन्मते उपहितब्रह्मान्यविषयकज्ञानस्यैव ब्रह्मप्रमातिरिक्तत्यनेन विवक्षिततया तदबाध्यत्वस्य वियदादिसाधारण्यात् । सप्रकारकज्ञानाबाध्यत्वं तु न विवक्षणीयम्, तत्तेदंतोपलक्षितविषयकनिर्विकल्पकधीबाध्ये नायं स इति भ्रमसिद्धभेदेऽपि सत्त्वात् । वस्तुतस्तु जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्माविषयकज्ञानाबाध्यमेव अबाध्यान्तेन विवक्षणीयम् । तदर्थश्च जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मविषयताशून्यधीः ध्वंसश्चेत्यन्यतरजन्यनाशप्रतियोग्यज्ञानप्रयुक्तान्यत्वम्, तेन ब्रह्मत्वज्ञानत्वोपलक्षितयोः भेदस्यापि तदुपलक्षितब्रह्ममात्रविषयकनिर्विकल्पकधीबाध्यत्वात् पूर्वमतेऽपि तत्र सिद्धसाधनता दुर्वारेति शङ्कानवकाशः । एतादृशं च ज्ञानं जीवब्रह्मभेदवादिनो यद्यपि तान्त्रिकस्य नानुमतम्, तथापि उक्तनिरूपितत्वद्वय-

---

* ब्रह्मान्यप्रमाबाध्यतया इति पाठः ।

शून्यविषयताशालिज्ञानं तस्यापि संमतमेव । विस्तरस्तु शास्त्रारम्भसमर्थने द्रष्टव्यः ।

यदि च ज्ञानमपि स्वप्रागभावध्वंसः, घटादिध्वंसोऽप्युत्तरावस्थारूपो भाव एवेति मन्यते तदा ध्वंसपदेन ज्ञानान्यध्वंसो विवक्षणीयः । यद्वा उक्तब्रह्मविषयताशून्यधीजन्यत्वध्वंसत्वावच्छिन्नजनकतानिरूपितजन्यत्वान्यतरवन्नाशप्रतियोग्यज्ञानप्रयुक्तान्यत्वम् अबाध्यान्तेन विवक्षणीयमिति दिक् ॥

यत्तु ब्रह्मप्रमेत्यत्र प्रमापदस्य सप्रकारकयथार्थज्ञानपरत्वे वियदादीनां तदन्यब्रह्मनिर्विकल्पकज्ञानबाध्यत्वात् पक्षालाभः, सप्रकारकज्ञानमात्रस्य प्रमात्वासंभवश्च ; न च प्रत्यक्षादीनां व्यावहारिकप्रमाणत्वेन तज्जन्यज्ञानानामपि व्यावहारिकप्रमात्वमस्त्येवेति वाच्यम्, तथात्वे इयं शुक्तिः सतीत्यादिज्ञानानामपि ब्रह्मप्रमात्वेन तद्बाध्यशुक्तिरजतादेः पक्षतापत्तावंशतः सिद्धसाधनस्य दुष्परिहरत्वापत्तेः ; निष्प्रकारकज्ञानपरत्वे तत्त्ववादिना निष्प्रकारकज्ञानानङ्गीकारेण तं प्रति आश्रयासिद्धः ; नैयायिकैरपि ब्रह्मविषयकनिष्प्रकारकज्ञानानङ्गीकारेण तन्मतेऽप्याश्रयासिद्ध्यापत्तिरित्यतो ब्रह्मविषयकभ्रमभिन्नज्ञानमेव ब्रह्मप्रमेत्यननेन विवक्षितमिति केनचित् उक्तम् । तन्न, नैयायिकं प्रति तत्त्ववादिनं

अति च विवादे उक्तविशेषणस्य अनुपादेयत्वात्, असत्ख्याातिवादिमते आश्रयासिद्धेरनवकाशाच्च । तत्त्ववादिशब्देन तान्त्रिकानुयायिविवक्षायामपि नैयायिकैरपीत्यादेरसंगतिरेव । अस्तु वा यथाकथंचित् । तथापि प्रमापदस्य भ्रमभिन्नार्थकत्वे ब्रह्मपदवैयर्थ्यं दुर्वारमेव । सिद्धान्ते तु प्रमापदस्य अन्याविषयकार्थकतया ब्रह्मपदसार्थकता बोध्या ।

विमतत्वं च यद्यपि यां कांचित् विमतिमादाय ब्रह्मणि शुक्तिरूप्यादौ च अतिप्रसक्तम् उक्तरूपावच्छिन्नविशेष्यकविमतिविवक्षणे च उक्तरूपस्यैव पक्षतावच्छेदकत्वसंभवात् इतरांशोपादानमनतिप्रयोजनम्, तथापि ब्रह्मशुक्तिरूप्याद्यविषयिणी तुच्छाविषयिणी च या धीः यां कांचित् तादृशधियं वियदादिसर्वदृश्यविषयिणीं तद्व्यक्तित्वेनोपादाय तद्धीविषयताया उपलक्षणविधया पक्षतावच्छेदकत्वानुसरणात् न दोषः । तस्याः विशेषणविधया पक्षतावच्छेदकत्वे विशिष्टविशेष्यकबुद्धौ विधेये तत्संबन्धे वा विशेष्यतावच्छेदकावच्छेद्यत्वं प्रतीयते; व्याप्यवृत्तेश्च नावच्छेदकमङ्गीक्रियते इति मते मिथ्यात्वस्य तत्प्रातियोगिकस्वरूपसंबन्धस्य वा व्याप्यवृत्तेः उक्तपक्षतावच्छेदकावच्छेद्यत्वासंभवेनानुमितेर्भ्रमत्वापत्तिः ; अतस्तदुपेक्षणम् । यद्धीविषयत्वं पक्षतावच्छेदकीक्रियते

तद्बुद्ध्यसमानकालीनघटादौ विद्यमानस्य वक्ष्यमाणप्रतियोगित्वादिरूपमिथ्यात्वस्य पक्षतावच्छेदकीभूततद्बुद्धिविषयतासमानकालीनत्वं विषयताया ज्ञानैकसमानकालीनत्वम् इति मते बाधितमिति अनुमितेः भ्रमत्वापत्तिरतः तदुपेक्षणमित्यपि केचित् ॥

यत्तु पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धिरूपानुमित्यनुरोधेन अनुमितिकाले सत एव धर्मस्य पक्षतावच्छेदकत्वमुचितम्, ब्रह्मप्रमेत्याद्यनुगतधर्माश्रयविमतिविषयत्वं वा पृथिवीत्वजलत्वाद्यननुगतधर्माश्रयविमतिविषयत्वं वा पक्षतावच्छेदकं न अनुमानकाले अस्ति, विमतेः समयबन्धसभ्यानुविधेयसंवरणादिना व्यवहितत्वात्, विषयतायाश्च विषयिसमानकालीनत्वनियमादित्यनुशयेन विमतेः तद्विषयत्वस्य वा उपलक्षणविधया पक्षतावच्छेदकत्वानुसरणम्; ननु पक्षतावच्छेदकाभावे, पक्षतावच्छेदकविशिष्टे हेतुमत्ताज्ञानरूपपक्षधर्मताज्ञानं न स्यादिति चेत्, न, स्वरूपसत्पक्षतावद्धर्मताज्ञानस्यैव पक्षधर्मताज्ञानत्वात्, न चावच्छेदकासत्त्वे पक्षतापि कथं वर्ततामिति वाच्यम्, विषयजन्यं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणे विषयत्वेनाभिमते घटादौ स्वज्ञानात् पूर्वं विषयत्वस्याभावेऽपि विषयत्वेना-

वच्छेद्याया: स्वज्ञानं प्रति जनकताया: सत्त्वस्यैवोपपत्ते: ; वस्तुतस्तूत्सर्गतो विशेषणावगाहित्वरूपप्रमाणस्वरूपबाधोऽत्र कल्पे दुर्वार: ; अत एव गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यत्र बाध उक्त: ; उपलक्षणत्वे तु तदसंभव: ; अतो विमतिविषयत्वज्ञानं तद्विषयत्वं वा विशेषणविधया पक्षतावच्छेदकम् ; न्यायवाक्यप्रयोज्यपरामर्शपूर्वक्षणे विमतिज्ञानं तदुत्तरक्षणे चरम: परामर्श: तदुत्तरक्षणे अनुमितिरिति पक्षतावच्छेदकानुमित्यो: समानकालीनत्वोपपत्तिरिति ॥

तदसत्, पक्षतावच्छेदकधर्मसामानाधिकरण्येन साध्यसिद्धौ साध्यपक्षतावच्छेदकयो: समानकालीनत्वस्यापि अनपेक्षितत्वेन पक्षतावच्छेदकानुमित्यो: समानकालत्वापेक्षाया: दूरनिरस्तत्वात् । अन्यथा गन्धप्रागभावोपलक्षिते घटे गन्धानुमित्युच्छेदापत्ते: । अत एव गन्धप्रागभावावच्छिन्नघटादिपक्षकस्थल एवासंकीर्णबाधो न्यायविद्भिरुपदर्शित: । किं च तद्धर्मविशिष्टविशेष्यकानुमितौ तद्धर्मसाध्ययो: समानकालत्वभानानुरोधेन तयो: समानकालत्वापेक्षायामपि तद्धर्मानुमित्यो: समानकालत्वापेक्षायां न किंचित् बीजमस्ति । तथा सति भाविगन्धविशिष्टे रूपवत्त्वानुमितेरिदानींतनाया अप्यनुपपत्ते: । एतेन परामर्शकाले पक्षतावच्छेदकाभावे तद्विशिष्टे हेतुमत्ता-

ज्ञानरूपपरामर्शानुपपत्तिशङ्कापि निरस्ता। स्वरूपसत्पक्षताव-
द्धर्मताज्ञानस्य अनुमितिहेतुत्वे द्रव्यं धूमवदिति परामर्शात् प-
र्वतो वह्निमानित्यनुमित्यापत्तिः, उपलक्षणविधया पक्षतावच्छे-
दकावच्छिन्नविशेष्यताकपरामर्शस्य हेतुत्वं च परामर्शकाले प-
क्षतावच्छेदकाभावेऽपि उपपन्नम्। किं च नात्र पक्षतावच्छेदक-
विशिष्टे पक्षे हेतुमत्ताज्ञानासंभवोऽपि, पक्षतावच्छेदकहेत्वोः
समानकालीनताया: निर्बाधत्वात्। अत एव न प्रमाणस्वभा-
ववाधोऽपि। अपि चानुमितिर्द्विविधा पक्षतावच्छेदकोपल-
क्षिते साध्यावगाहिनी तद्विशिष्टे साध्यावगाहिनी च, तत्र च
आद्याया उद्देश्यत्वे असंकीर्णबाधासंभवेऽपि द्वितीयाया
उद्देश्यत्वे तत्संभवेन अत एवेत्याद्युपष्टम्भासंगतिः। न
च यद्धीविषयत्वमित्यादिना त्वदुक्तरीत्या पक्षतावच्छेदकी-
भवद्विमत्यसमानकालीनघटादावनुमितेः भ्रमत्वापत्तिवारणा-
यैव विमतिविषयत्वज्ञानस्य पक्षतावच्छेदकत्वानुसरणमाव-
श्यकमिति वाच्यम्, एवमपि विमतिज्ञानासमानकालीने
घटाद्यंशे अनुमितेर्भ्रमत्वापत्त्या विमतिज्ञानविषयत्वस्यापि
विशेषणविधया पक्षतावच्छेदकत्वासंभवात्। तथा च न्या-
यवाक्यप्रयोज्यपरामर्शपूर्वक्षणे विमतिज्ञानकल्पनम्, तस्य
तद्विषयत्वस्य वा, पक्षतावच्छेदकत्वानुसरणं च निरर्थकमेव।

किंचोक्तविमतिज्ञानस्य तद्विषयत्वस्य वा विशेषणविधया पक्षतावच्छेदकत्वे पूर्वोक्तरीत्या अनुमितेः भ्रमत्वापत्तिः मिथ्यात्वस्य अव्याप्यवृत्तितामाश्रित्य अर्थान्तरापत्तिश्च, मन्मते त्वनवच्छिन्नविशेषणतायाः साध्यतावच्छेदकसंबन्धत्वोपगमाददोषः । अव्याप्यवृत्तितानिर्वाहकविलक्षणावच्छेदकत्वानिरूपकत्वमनवच्छिन्नत्वम्, तद्विशिष्टविशेषणता च साध्यतावच्छेदकसंबन्धः । पक्षतावच्छेदकनिष्ठावच्छेदकत्वं च व्याप्यवृत्त्यवच्छेदकसाधारणमिति विमतिज्ञानस्य तद्विषयताया वा विशेषणविधया पक्षतावच्छेदकत्वेऽपि नार्थान्तरमिति यदि विभाव्यते तदा विमतिविषयतायाः पक्षतावच्छेदकत्वोपेक्षायां प्रागुक्तं बीजान्तरमनुसंधेयमिति दिक् ॥

प्रत्येकं वा विप्रतिपत्तिः—वियत् मिथ्या न वा, पृथिवी मिथ्या न वेत्यादि । एवं वियदादेः पक्षत्वेऽपि न घटादौ संदिग्धानैकान्तिकता, पक्षसमत्वात् घटादेः । तथा हि—पक्षे साध्यसंदेहस्य अनुगुणत्वात् पक्षभिन्न एव संदिग्धानैकान्त्यस्य दोषत्वं वाच्यम् । अत एवोक्तं साध्याभावनिश्चयवति हेतुसंदेह एव संदिग्धानैकान्तिकतेति । पक्षत्वं तु साध्यसंदेहवत्त्वम्, तच्च घटादिसाधारणम्, अतस्तत्र संदिग्धानैकान्तिकत्वं न दोषः । पक्षसमत्वोक्तिस्तु प्रतिज्ञा-

विषयत्वाभावमात्रेण। न च तर्हि प्रतिज्ञाविषयत्वमेव पक्षत्वम्, स्वार्थानुमाने तदसंभवात्। एवंविधविप्रतिपत्तौ सत्यामेव प्रमाणाभिधानावसरे प्रत्येकं वियदादिधर्मिनिर्देशात् नाप्राप्तकालत्वम्। यत्तु प्रकृतानुमित्युद्देश्यतावच्छेदकधर्मवत्त्वं पक्षत्वमिति, तन्न, साध्याभाववत्तया गृह्यमाणधर्मिवृत्तितया ज्ञानस्यानुमितिविरोधित्वे तादृशधर्मिणः प्रकृतानुमित्युद्देश्यत्वतदभावयोः अकिंचित्करत्वात्। न च पक्षे साध्यसंदेहदशायामपि अनुमित्युत्पत्त्या पक्षातिरिक्ते धर्मिणि साध्याभावावगाहित्वमेव व्यभिचारज्ञाननिष्ठप्रकृतानुमितिप्रतिबन्धकतायामवच्छेदकमुपेयते इति पक्षातिरिक्ते साध्याभावसंशयात्मकस्य व्यभिचारज्ञानस्यानुमितिविरोधित्वं निष्प्रत्यूहमिति उक्तस्थले संदिग्धानैकान्तिकता दुर्वारेति वाच्यम्, यतो व्यभिचारज्ञानस्य न साक्षादनुमितिविरोधित्वम्, मानाभावात्, उक्तं हि करणे पूर्णे किं न सिध्येदिति, किं तु तज्जनकव्याप्तिग्रहविरोधितयैव, तत्र च साध्याभावविषयतानिरूपितधर्मिविषयतायाः पक्षविषयताव्यावृत्तायाः विरोधितावच्छेदककोटौ निवेशे सर्वेषामेव धर्मिणां कदाचित् अनुमित्युद्देश्यतासंभवेन विरोधितावच्छेदकस्यैव दुर्वचत्वापत्तेः। विशिष्य यत्किंचिद्धर्मिविषयताया एव धर्मि-

विषयताया विरोधितावच्छेदककोटिनिवेशस्तु विनिगमनाविरहादयुक्तः। यद्धर्मिविषयताया विरोधितावच्छेदककोटिनिवेशः तद्धर्मिपक्षकानुमितौ तद्धर्मिकसाध्यसंशयस्य दूषकत्वापादकश्च। तस्मात् साध्यप्रकारत्वानिरूपितसाध्याभावप्रकारतानिरूपितधर्मिविषयताया एव विरोधितावच्छेदककोटौ निवेश्यत्वान् न संदिग्धानैकान्त्यम्। वस्तुतस्तु अनुकूलतर्कास्फूर्तौ पक्षीयव्यभिचारसंशयोऽपि व्याप्तिग्रहप्रतिबन्धको भवत्येव। यदाहुः—अनुकूलतर्कास्फूर्तौ संदिग्धानैकान्तिकस्येष्टत्वादिति। अत एव पक्षः साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वात् इत्यादयोऽनुकूलतर्कविरहिणो बाधप्रतिरोधयोरनवतारेऽपि पक्ष एव संदिग्धानैकान्तिकतया अप्रयोजका गीयन्ते इत्यादि। तथा च प्रकृते अनुकूलतर्काणां वक्ष्यमाणत्वात् न संदिग्धानैकान्तिकत्वमिति विभावनीयम्॥

नन्वेतादृशविप्रतिपत्तिप्रदर्शनमयुक्तम्; तथा हि—न तावत् विप्रतिपत्तिवाक्यस्य पक्षतासंपादकतयैवोपयोगः, सिषाधयिषाविरहसहकृतसाधकमानाभावरूपायाः तस्या विप्रतिपत्तिजन्यसंशयानात्मकत्वात्; संशयस्य पक्षतात्वे च श्रुत्यात्मनिश्चयवतोऽनुमित्सया तदनुमानं न स्यात्, तस्य निष्फलत्वात्; आहार्यसंशयस्यातिप्रसञ्जकत्वात; यत्तु विप्रति-

पत्तिजन्यसंशयस्य अनुमित्यनङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वमस्त्येवेति, तन्न, वादिप्रतिवादिनोः मध्यस्थानां च निश्चयवत्त्वेन व्युदसनीयसंशयस्यैव अभावात्; न च वाद्यादिषु संशयं प्रति विप्रतिपत्तेर्निश्चयादिना प्रतिबन्धादजनकत्वेऽपि स्वरूपयोग्यत्वात् संशयस्मारकतयैव संशयाभावरूपफलज्ञानोपयोगिनी विप्रतिपत्तिरवश्यं प्रदर्शनीयेति वाच्यम्, वाद्यादीनां विशेषदर्शनवत्त्वध्रौव्येण क्वचिदपि वाद्यादिनिष्ठसंशयानुपधायकत्वेन तादृशसंशयं प्रति तस्याः स्वरूपयोग्यत्वस्याप्यकल्पनात्; क्वचित् फलोपहितजातीयस्यैव स्वरूपयोग्यत्वात्; वाद्यादीनां निश्चयवत्त्वस्य तदधीनसंशयाभाववत्त्वस्य च कथातः पूर्वं सभविद्यत्वज्ञापकपरीक्षादिना सिद्धत्वेन तादृशफलज्ञापनस्य व्यर्थत्वाच्च; न च परपक्षमालम्ब्याहंकारिणः ख्यात्याद्यर्थं जल्पादौ प्रवृत्तिदर्शनेन वाद्यादीनां स्वस्वस्थापनीयसाध्यवत्तानिश्चयवत्त्वमावश्यकमिति वाच्यम्; तथापि तेषां तादृशसाध्यवत्तानिश्चयसाध्याभाववत्तानिश्चययोरन्यतरवत्त्वनियमेन संशयासंभवस्य सुस्थत्वादिति चेन्न, आपातपरीक्षया उक्तनिश्चयवत्त्वसंभावनायामपि वाद्यादीनां तादृशनिश्चयवत्त्वस्य अनावश्यकत्वात्। विशेषादर्शनदशायां वादिनोः सभापत्यादिषूदासीनेषु

वा विप्रतिपत्तेः संशयोपधायकत्वेन स्वरूपयोग्यताया दुरपह्नवत्वाच्च । न च जल्पे वादिविजयरूपप्रयोजनसद्भावात् न फलान्तरप्रदर्शनमावश्यकमिति वाच्यम्, वाद्याद्यपेक्षितविजयस्य सभापत्यादीन् प्रति फलत्वाभावेन तेषां फलान्तरज्ञानं विना कथाश्रवणानुकूलमनःप्रणिधानादौ प्रवृत्त्यसंभवात् । वाद्यादीनां तात्कालिकसंशयाभाववत्त्वे निश्चितेऽपि निश्चयजन्यसंस्कारस्य कालान्तरे उच्छेदशङ्कया तादृशसंशयोत्पत्तिसंभवज्ञानेन तदापि संशयाभावोऽनुवर्ततामितीच्छायाः संभवाच्च । तादृशसंस्कारोच्छेदबीजं च विषयान्तरव्यासङ्गादिरेव सर्वानुभवसिद्धः । उद्बोधकसत्त्वासत्त्वाभ्यामतिप्रसङ्गनिरासश्च परेणैव प्रत्याख्यातः ।

यत्तु विप्रतिपत्तिजन्यसंशयस्य व्युदसनीयतया विचाराङ्गत्वेऽपि पारिषद्येषु संशयस्य विप्रतिपत्तिं विनापि वादिप्रतिवादिसन्नाहादिना कोट्युपस्थितौ विशेषादर्शने सति संभवेन विप्रतिपत्तिरनावश्यकीति, तन्न, वादिप्रतिवादिसन्नाहादितः पूर्वमपेक्षिते कथाश्रवणानुकूलमनःप्रणिधानोपयोगिफलवत्ताज्ञाने तदुत्तरभाविन्याः कोट्युपस्थितेः अप्रयोजकत्वात् ।

किं च यथा समयबन्ध एतन्मतमालम्ब्यैव युवाभ्यां विचारः कर्तव्यः इत्याकारको मध्यस्थेन क्रियते, अन्यथा

वादिनोः मतान्तरप्रवेशे अव्यवस्थापत्तेः, यथा वा वादिनौ परीक्ष्येते, अन्यथा मूर्खस्य विचारे मध्यस्थस्यैवोपहास्यतापत्तेः, तथा विप्रतिपत्तिरपि मध्यस्थेन प्रदर्शनीयैव, अन्यथा प्रासङ्गिकविषयान्तरमादाय वादिनोरेकस्य विजयस्वीकारापत्त्या प्रकृतविषये विजयपराजयव्यवस्थापनरूपस्य मध्यस्थकर्तव्यस्य अनिर्वाहात् । विप्रतिपत्तौ कृतायां तु सभास्थैः तच्छ्रवणात् विप्रतिपत्तिकोटी अपलप्य प्रासङ्गिकविषयान्तरमालम्ब्य न वादिभ्यां जयः स्वीकर्तुं शक्यत इति । न च त्वयेदं साधनीयम् अनेनेदं दूषणीयमिति मध्यस्थवाक्येन तन्निर्वाहः शङ्क्यः, यतो विप्रतिपत्तिप्रदर्शनोत्तरं वादिना एकस्मिन् पक्षे परिगृहीते समर्थनाशक्त्या तत्परित्यक्तः पक्ष एव मया समर्थनीय इति परकीयाशक्तिविशेषख्यापनपूर्वकं स्वीयशक्तिविशेषख्यापनार्थिनोऽप्यहंकारिणो विजयोत्कर्षाय विचारे प्रवृत्तिदर्शनेन तदनुसारिणा मध्यस्थेन वादिनोरन्यतरस्य तादृशाभिलाषसंभवशङ्कया विप्रतिपत्तिं प्रदर्श्य अनयोर्यथाभिलषितमेका कोटिरेकेन अपरा तु अपरेण व्यवस्थापनीयेत्यपि वक्तुं शक्यत्वेन त्वयेदं साधनीयम् अनेनेदं दूषणीयमिति मध्यस्थवाक्यस्याप्यनावश्यकत्वात् । विप्रतिपत्तौ दर्शितायां तु वादिनोर्द्वयोर-

पि मयैव प्रथमं पक्षपरिग्रहे मय्येव अशक्तिविशेषः ख्यापितः स्यात् स मा भूदिति अभिप्रायेण त्वयैव विषयो देय इति मध्यस्थं प्रत्युक्त्यनन्तरमेव तादृशव्यवस्थाया मध्यस्थकर्तव्यत्वात्। वादकथायां च विप्रतिपत्तेरनावश्यकत्वं तार्किकाणामप्यनुमतम्। यथोक्तं प्रत्यक्षालोके एकवाक्यतापि विप्रतिपत्तिः अतो भ्रममूलकता निराकृता विवादाङ्गसंशयबीजभूतविप्रतिपत्त्यप्रदर्शनं न्यूनता च परिहृता। तत्त्वनिर्णिनीषुविचारतया अन्यहेतुकसंशयस्यापि भावात्। तदुक्तम् 'अन्यत्र सार्वहेतुक इति' इति दिक्॥

यत्तु विप्रतिपत्तिजन्यसंशयस्य व्युदसनीयतया तज्जनकवाक्यस्य यद्यावश्यद्वारकता तदा अज्ञानविपर्यययोरपि व्युदसनीयतया तज्जनकवाक्यस्यापि विप्रतिपत्तिवाक्यवद्विचाराङ्गत्वापत्तिरिति, तदसत्, अज्ञानस्य अनादितया तज्जनकवाक्यस्य अलीकत्वात्, संशयव्युदसनस्य तन्मूलभूताज्ञानव्युदसनपूर्वकत्वनियमेन पृथक् प्रयत्नानपेक्षणाच्च; विचारं विना तात्त्विकविपर्ययकोट्योः निर्धारणासंभवेन एकतरनिर्देशायोगाच्च; मध्यस्थसभापत्यादीनामेकदर्शनप्रविष्टत्वनियमाभावेन सर्वव्युदसनीयैककोटेरभावाच्च; उक्तरीत्या फलान्तरस्यापि सद्भावेन विप्रतिपत्तेरावश्यकत्वाच्च। एतेनैव

तादृशसंशयं प्रति साधारणधर्मादीनामपि स्वरूपयोग्यतया तत्प्रतिपादकवाक्यस्यापि विचाराङ्गता स्यादिति निरस्तम् । तस्मात् समयबन्धादिवत् स्वकर्तव्यतानिर्वाहाय मध्यस्थेनादौ विप्रतिपत्तिः प्रदर्शनीयैव । प्रमाणं चात्र विमतं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवत्, इत्याद्यनुमानमेव । नावयवेष्वाग्रहः ॥

ननु किमिदं मिथ्यात्वम्? न तावत् अत्यन्तासत्त्वं अपसिद्धान्तात्; नाप्यनिर्वाच्यत्वं तस्यानिरुक्तेः; नापि सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयवत्त्वं तदेकतरविशिष्टापरवत्त्वं वा तत्, सत्त्वासत्त्वयोरेकतरनिषेधे अपरसत्त्वावश्यकतया व्याघातात्; निर्धर्मकब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्या अर्थान्तरात्; शुक्तिरूप्ये बाध्यत्वरूपासत्त्वव्यतिरेकासिद्ध्या साध्यवैकल्याच्च; न च प्रकृतसाध्यघटकसत्त्वात्यन्ताभावस्य स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वरूपतया असत्त्वात्यन्ताभावस्य च सत्त्वेन प्रतीयमानत्वपर्यवसितत्वेन द्वयोश्च शुक्तिरूप्यादावेव सत्त्वेन न व्याघातो न वा साध्यवैकल्यमिति वाच्यम्, अत्यन्तासतः प्रतीत्यङ्गीकारे शब्दादितः सत्त्वेनापि प्रतीतिसंभवेन *शून्यवादापत्तिवारणा-

---

* अत्यन्तासत्यतिव्याप्तिवाराणाय

न्योपात्तस्य निरुक्तांशस्य निरर्थकत्वापत्तेः; तुच्छं सत् इति प्रतीतेरसंभवेऽपि विषयत्वादिना तुच्छावगाहिन्या विषयः सन् शशशृङ्गं सत् इति प्रतीतेः दुरपह्नवतया असतः सत्त्वेन प्रतीतेर्दुरपवादत्वात् इति चेत्;

मैवम्, असद्विलक्षणत्वं हि सत्तादात्म्यम्; न चैवं सति शुक्तिरूप्यादौ साध्यवैकल्यम्, शुक्तिरूप्यादेः अनिर्वचनीयतावादिना तान्त्रिकैकदेशिना विवाद एव उक्तोभयस्य साध्यत्वोपगमात्। माध्वं प्रति प्रयोगे च स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वमात्रस्य साध्यत्वात् नोक्तदोषावकाशः। अत्यन्तासत्त्वमादाय अर्थान्तरं च, सत्तादात्म्यादिरूपासद्विलक्षणत्वस्य पक्षतावच्छेदककोटौ निवेशात् न संभवति। घटाद्यवच्छिन्नचित्येव गुरुत्वाद्यारोपस्वीकारेण ब्रह्मणो जगदुपादानत्वेन च परोक्षभ्रमविषये नांशतो बाधः। न वा पक्षाद्बहिर्भावः। सत्तादात्म्यस्य स्वस्मिन्नपि स्वसंबन्धाभ्युपगमात् नोक्तदोषौ। सत्तादात्म्यतत्त्वान्यतरवत्त्वं वा तत्। न च इदं रजतं सत् इत्यध्यासबलेन शुक्तिरजतादाविव शशशृङ्गं सत् इति प्रतीतिबलात् शशशृङ्गेऽपि सत्तादात्म्यमङ्गीकार्यम्, एकत्रान्यथाख्यातिरपरत्र अनिर्वचनीयख्यातिरित्यत्र विनिगम-

काभावादिति वाच्यम्, शशशृङ्गं सत् इति प्रतीतेरपि अलीकविषयकत्वासिद्धेः । तथा हि— किमलीकं शशशब्दार्थः, शृङ्गशब्दार्थः, समासार्थो वा । नाद्यद्वितीयौ, पदान्तरवैयर्थ्यापातात् वाच्यतावच्छेदकानिरूपणाच्च । शशीयत्वसमानाधिकरणशृङ्गत्वादिकम् अलीकत्वान्न तथा; प्रवृत्तिविषयवृत्तेरेव तथात्वात् । नाप्यखण्डधर्मान्तरम्, शब्दान्यतः तस्य प्रतीत्यभावेन शब्दादेव तत्प्रतीतेर्वक्तव्यतया समयग्रहार्थं शब्दान्तरापेक्षापरंपरायां अनवस्थाप्रसङ्गात् । विशेषादर्शिनामेतादृशवाक्यजन्यप्रतीत्युत्तरं शृङ्गं शशीयं न इति बुद्ध्यापत्तेश्च । न हि असति विशेषदर्शने गोशृङ्गं सदिति प्रत्ययादेतादृशप्रत्ययस्य स्वविरोधिज्ञानप्रतिबन्धादिरूपकार्यनिर्वाहकतायामस्ति मनागपि विशेषः कश्चित्, अन्यथा अनुभवविरुद्धकल्पनापत्तेः । अथोच्यते शशीयत्वशृङ्गत्वाभ्यामलीकं प्रतीयत इति, तन्न, असत्ख्यातिविलोपापत्तेः । अत एव न तृतीयः; शृङ्गं शशीयमित्यादौ गत्यभावाच्च । उद्देश्यतावच्छेदकावच्छेदेन विधेयावगाहिनि विषयः सन्नित्यादिप्रत्यये न विषयत्वेन असद्भानं किंतु विषयत्वव्यापकतायाः सति तादात्म्ये वा भानमुपेयते । सा च व्यापकता मतभेदेन प्रातिभासिकी व्यावहारिकी वेत्यन्यदेतत् । भ्रमत्वमपि तादृशज्ञानस्य सर्वसंमतमेव ॥

नन्वेवमत्यन्तासतः सत्त्वेन प्रतीतिरप्राप्तैवेति यथाश्रुतमेव रमणीयमिति चेत्, सत्यम्, एतद्विकल्पविषयः सन्निद्याकारकप्रतीत्या असतोऽपि सत्त्वेन प्रतीतिरस्तीति यदि कश्चित् ब्रूयात् तं प्रत्येव उक्तरीत्यनुसरणम्, तत्रापि तद्धीविषयत्वेन भासमाने तुच्छान्यस्मिन्नेव सत्त्वं भासत इत्युच्यते तदा यथाश्रुतमेव रमणीयम् ॥

केचित्तु सत्त्वेन प्रतीत्यर्हत्वं सदसदुभयावाचकतदादिपदभिन्नपदवाच्यतावच्छेदकरूपावच्छिन्नं सत्त्वेन प्रतीयमानत्वम् । न चैवमपि कालासंबन्धि सदिति प्रतीतिमादाय उक्तदोषतादवस्थ्यम्; न ह्यस्ति नियमः; सत्तादात्म्यशून्यत्वमेव तुच्छादिपदवाच्यतावच्छेदकं न कालासंबन्धित्वादिकमिति इति वाच्यम्; सत्त्वेन प्रतीयमानत्वमित्यत्र सत्त्वशब्देन असद्व्यावर्तकत्वेनाभिमतसत्तादात्म्यकालसंबन्धादीनां यावतामेव विशिष्योपादेयतया उक्तदोषानवकाशात् । शशशृङ्गं सदित्यादिप्रतीतिमादाय उक्तदोषस्तु प्राग्वन्निरसनीय इत्याहुः ॥

यद्वा सत्तादात्म्यप्रकारकापरोक्षविषयत्वं तत् । गुरुत्वाद्यपि उक्तरूपेण ईश्वराद्यपरोक्षविषय एव । न च ईश्वराद्यपरोक्षमबाध्यत्वेन दृश्यमवगाहते, येन विपर्ययः स्यात् । यत्तु सद्रूपप्रतियोगिकत्वविशिष्टतादात्म्यस्य सद्रूपे अभावेन तस्य अ-

सत्त्वापत्तिः, इष्टापत्तौ तत्सत्त्वबोधिकानाम् 'सत्यम्' इत्यादि-श्रुतीनां अप्रामाण्यापत्तिरिति, तदसत्, सत्प्रतियोगिकतादात्म्यशून्यस्यैव असत्त्वरूपत्वेन सत्प्रतियोगिकत्वविशिष्टतादात्म्यानभ्युपगमेऽप्यसत्त्वापादनायोगात्; प्रकृतसाध्यशरीरे उक्तासत्त्वाभावस्य निवेशेऽपि श्रौतसत्यादिशब्दानां अबाध्यार्थकताया अनपवादाच्च। न चोक्तमर्थान्तरम्; एकेन सर्वानुगतेन सत्त्वेन सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत् प्रपञ्चस्य सत्त्वभावताकल्पने मानाभावात्। अनुगतव्यवहाराभावप्रसङ्गाच्च । न च विशिष्टस्य त्वन्मते अतिरिक्ततया घटादितादात्म्यापन्नस्य सतः पटादितादात्म्यापन्नात् तस्मात् अतिरिक्ततया एकेन सता सर्वानुगतेन सत्प्रतीत्युपपादनं तवापि दुर्घटम्, शुद्धस्य चाक्षुषाद्यविषयत्वात् विषयत्वे च दृश्यत्वेन मिथ्यात्वापत्तेः न तेनापि उक्तप्रतीत्युपपादनसंभव इति वाच्यम्, अविद्योपहितसद्रूपस्यैव सर्वदृश्यानुगतस्य घटः सन्नित्यादिनिखिलप्रतीतिविषयत्वोपगमेनानुगतप्रतीत्युपपादनसंभवात्, अनेकसद्व्यक्तिकल्पने गौरवाच्च । वियदादिभेदभिन्नब्रह्मरूपानन्त्यस्य तव मम च साम्येऽपि तदन्यविषयवियदादिसमसंख्याकसद्व्यक्तिकल्पनागौरवं तव मते दुर्वारमेव। सविशेषाभेदेऽपि व्यक्तिद्वयस्यावश्यकत्वात् । प्रपञ्चितं चैतदन्यत्र । सद्विशेष्यकप्रतीतावुपहितस्य विषयत्वेऽपि

तद्विशेषणकप्रतीतौ शुद्धस्यैव विशेषणत्वसंभवाच्च। दृश्यत्वं च प्रकारतानिरूपितविषयत्वम्। यद्वा प्राचीनतार्किकमत इव प्रकारताया न विषयतात्वम्, अतो न ब्रह्मणो दृश्यत्वापत्तिः॥

यत्त्वेवं सति पारमार्थिकरजतं विनापि शुक्तौ रजतप्रतीतिव्यवहारादिदर्शनात् परमार्थसत्पदार्थं विनापि सत्प्रतीत्यादेरुपपत्तौ अतिलाघवमिति ब्रह्मापि सद्रूपं न स्यादिति, तन्न, दृश्यमात्रबाधकज्ञानविषयस्य ब्रह्मणो बाधकान्तराभावेन अबाध्यप्रसिद्धेरप्रत्यूहत्वात्। न च शून्यज्ञानमेव तद्बाधकम्, तस्य परतः सिद्धौ सांवृतत्वाद्यापत्तेः; स्वतः सिद्धौ शून्यतायाः परिभाषामात्रत्वात्। व्यक्तीभविष्यति चेदमुपरिष्टात्। सन्ति च ब्रह्मबाध्यत्वाभावबोधिकाः 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अविनाशी वा अरेयमात्मानुच्छित्तिधर्मा' 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्' 'अस्तीत्येवोपलब्धव्यः' इत्यादिश्रुतयः। सन् घट इत्यादिप्रत्यक्षं च नातीन्द्रियवस्तुघटितबाध्यत्वाभावविषयकमित्यादि वक्ष्यते। किं च अबाध्यवस्तुमात्रं नाङ्गीकार्यमिति आपादयता सन् घट इति प्रतीतिरङ्गीक्रियते, न वा? न चेत्, अनुभवविरोधः; अङ्गीकारे तु सा अनुगतैकानिर्वाच्यसद्विषयिणी-

स्युच्यते न वा? न चेत्, अनुगतप्रतीत्यनुपपत्तिकल्पनागौरवे अनुगतानिर्वाच्यसद्विषयकत्वे च तद्बाधकधीविषयोऽन्यः स च इति उभयमङ्गीकार्यं तवेति गौरवं दुर्वारमेव इति यत्किंचिदेतत् ॥

यत्त्वेवं सति सत्त्वाभावानुमानस्य लाघवेन प्रातीतिकसत्त्वाभावेऽपि पर्यवसानापत्त्या जगच्छून्यमेव स्यादिति, तदपि न, शून्यत्वस्य निःस्वरूपतारूपत्वे अर्थक्रियाद्यनुपपत्तेः, अनिर्वाच्यतारूपत्वे तु इष्टापत्तेः, तृतीयप्रकारस्तु शून्यताया दुर्निरूपः । यत्तु निर्धर्मकत्वात् ब्रह्मणः सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन मिथ्यात्वापत्तिरिति; तदसत्, सद्रूपत्वेन ब्रह्मणः सत्त्वात्यन्ताभावानधिकरणत्वात् । सद्रूपत्वं च सत्त्वोपहितप्रतियोगिकतादात्म्यानुयोगित्वम् । तादात्म्यं च अत्र विशिष्टकेवलभावेन बोध्यम् । एवं च ब्रह्मणि सत्त्वस्यास्वीकारेऽपि न तत्र तस्यात्यन्ताभावः, स्वाश्रय इव स्वाश्रयीयकेवलरूपेऽपि तदभावानभ्युपगमात् । अन्यथा गगनैकदेशवृत्तिविहङ्गमसंयोगादेः गगनावृत्तितया गगने तदत्यन्ताभावस्वीकारापत्तेः । तथा ब्रह्मणि सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वसाधकत्वेन त्वदुक्तस्य निर्धर्मकत्वस्य ब्रह्मणि सत्त्वे तद्वत् बाध्यत्वाभावरूपसत्त्वस्यापि ब्रह्मण्यभ्युपगमसं-

भवेन नातिव्याप्त्यवकाशः । तदनभ्युपगमे च तद्वदेवोक्ता-भावद्वयस्यापि अनभ्युपगमसंभवेन नोक्तदोषावकाशः । यद्वा सद्रूपत्वेनेत्यस्य बाध्यत्वाभाववत्त्वेनेत्यर्थः, तथा च ब्रह्मणो भावरूपधर्मानाश्रयत्वेऽप्यभावरूपधर्माश्रयत्वेन नातिव्याप्तिः । न चोक्ताभावस्य ब्रह्मस्वरूपत्वे तस्मिन् तदभावोऽस्त्येवेति अतिव्याप्तिः, तद्भिन्नत्वे तेनैवाद्वैतहानिः, भावाद्वैतपक्षेऽप्यभावाश्रयत्वादिना भावेन ब्रह्मणः सविशेषत्वापत्तिः अभाववत्पदवाच्यता च स्यादिति वाच्यम् । यतः तादृशाभावस्य ब्रह्मात्मकत्वेऽपि तादृशाभावत्वोपहितसत्तादात्म्यस्य ब्रह्मणि सत्त्वेन तत्र तदत्यन्ताभावासंप्रतिपत्तेः । तस्य तद्भिन्नत्वेऽपि नाद्वैतहानिः, भावाद्वैतपक्षाश्रयणात् । तादृशाभावाश्रयत्वादिकं च न तादृशाभावब्रह्मोभयबहिर्भूतम् । एतन्मते अभावेन सविशेषता ब्रह्मण इष्टैव, स्वसमसत्ताकस्वभिन्नभावात्मकविशेषवत्ताया एव सविशेषतारूपत्वात् । एवं च विषयादिपदवाच्यतावदभाववत्पदवाच्यतापीष्टैवेति । न च ब्रह्मणोऽवाच्यता सिद्धान्तविरोधः, अभावान्यस्वज्ञानाबाध्यधर्मप्रवृत्तिनिमित्तकशब्दावाच्यत्वस्यैव मतान्तरात् व्यावृत्तस्य तदर्थत्वात् ॥

गुरुचरणास्तु सत्त्वाभाव इत्यत्र सत्त्वं सत्त्वोपहितता-

दात्म्यम्; सत्ता च सिद्धान्ते अबाध्यत्वोपलक्षितब्रह्मस्वरूपभूता परमते च तत्तद्घटादिरूपविषयसत्तात्मिका। तत्र सिद्धान्ते 'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः' इति पञ्चपादिकानुसारेण उक्तसत्ताया अधिकरणत्वमपि ब्रह्मणः कल्पितं स्वीक्रियते। सा च अधिकरणता स्वोपहिते ब्रह्मण्येव न तु शुद्धे, सत्त्वोपहिततादात्म्यं च शुद्धेऽपि स्वीक्रियते। एवं च स्वाभाविको यः सत्त्वसंबन्धः तदुपहितप्रतियोगिकस्य अनौपाधिकस्य केवलोपहितभावेन तादात्म्यस्य प्रतियोगिव्यधिकरणात्यन्ताभावः सत्त्वाभावशब्देन विवक्षितः। सत्तायाश्च सत्पदशक्यतावच्छेदकत्वेन मतद्वयसाधारणरूपेण साध्यकोटौ निवेशः; नातो विशिष्य ब्रह्मसत्ताया उपादाने सिद्धसाधनम्, तत्तत्स्वरूपसत्त्वोपादाने अंशतो बाधः, उक्तसत्तानामन्यतमत्वेन निवेशेऽपि तथेत्यादिदूषणावकाश इत्याहुः॥

अबाध्यं सर्वं प्रमेयमित्याकारकयत्किंचिद्धीविषयत्वमेव सत्त्वम्, तदभावश्च अत्र साध्यकोटौ प्रविष्ट इत्यपि वदन्ति। न चात्र कल्पे अबाध्यं सर्वं प्रमेयमित्यादिप्रतीतौ अबाध्यत्वेन तदुपहितब्रह्मणो विषयत्वेऽपि शुद्धस्याविषयत्वात् शुद्धेऽतिव्याप्तिः, तद्धर्मप्रकारकप्रतीतौ तद्ध-

र्मोपहितस्यैव विषयत्वमित्यन्यत्र व्यवस्थापितत्वात्; उपहितेऽव्याप्तिश्च; शुद्धब्रह्मणः सप्रकारकवृत्तिवेद्यत्वाभ्युपगमेऽपि अनेकत्वघटितसत्त्ववत्त्वस्य तत्र बाधितत्वेन उक्तवाक्यस्य प्रामाण्यानिर्वाहश्चेति वाच्यम्, पदार्थतावच्छेदकविशिष्टपरत्वशून्यतद्वाक्यतात्पर्यविषयलक्षणाग्रहाद्यजन्यबोधविषयताया एव तदर्थत्वात्। न च विशिष्टार्थपरत्वशून्यात् तादृशवाक्यात् विनापि लक्षणाग्रहादिकं शाब्दबोधासंभव इति शङ्क्यम्, विशिष्टपरत्वशून्यतानिश्चयसहकृतविशिष्टशक्तिग्रहादेवोपलक्षितार्थविषयकशाब्दबोधाभ्युपगमात्। उपपादितं चैतत् अन्यत्र। सर्वपदं च अशेषार्थपरतातात्पर्यग्राहकम्, अतो न काचित् अनुपपत्तिः॥

नन्वेवमपि प्रथमकल्पस्य प्रतिपन्नेत्यादिना पौनरुक्त्यमिति चेत्, न, प्रतिपन्नेत्यादेरुक्तसाध्यातिरिक्तसाध्यपरताया वक्ष्यमाणत्वात्। यत्तु सत्त्वेनाप्रतीयमानत्वं नासत्त्वं तथा सति असच्चेत् न प्रतीयेतेति त्वदुक्तावापाद्यापादकयोरविशेषप्रसङ्गादिति, तन्न, सत्तादात्म्यशून्यत्वस्य आपादकत्वेन अपरोक्षप्रतीत्यविषयत्वस्य च आपाद्यत्वेन विवक्षिततया उक्तदोषानवकाशात्। अधिकमनिर्वचनीयख्यातौ वक्ष्यते। एवं सद्भेदासद्भेदोभयवत्त्वम्, सद्भेदादिविशिष्टासद्भेदादिमत्त्वं वा मि-

ण्यात्वम् । न च सति सदन्तरभेदस्य असद्भेदस्य च सिद्ध-त्वात् सिद्धसाधनता शङ्क्या सत्त्वावच्छिन्नप्रतियोगिताकभे-दस्य विवक्षितत्वात् । न हि घटादिनिष्ठभेदप्रतियोगिताव-च्छेदकता सत्त्वपर्याप्ता ; तथा सति त्वन्मते घटो न सन्नि-त्यादिबुद्धेः प्रमात्वापत्तेः । यावन्ति सद्वृत्तित्वानि तदभाव-कूटवद्धर्मवत्त्वं वा सद्विलक्षणत्वम् , व्याहत्याद्युद्धारः प्राग्व-दिति सर्वमनवद्यम् ॥

इति प्रथमनिरुक्तिः ॥

## द्वितीयनिरुक्तिः ॥

———*———

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम् । ननु त्रैकालिकनिषेधस्य तात्त्विकत्वे अद्वैतहानिः, प्रातिभासिकत्वे सिद्धसाधनम् , व्यावहारिकत्वे तस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधितया अर्थान्तरम् , अद्वैतश्रुतेरतत्त्वावेदकत्वम् , तत्प्रतियोगिनोऽप्रातिभासिकप्रपञ्चस्यापारमार्थिकत्वं च स्यात्; अथ प्रपञ्चाधिकरणीभूतब्रह्माभिन्नत्वात् निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वम्; यद्वा अतात्त्विक एवायं निषेधः, अतात्त्विकत्वेऽपि न प्रातिभासिकः; न च तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वात् अर्थान्तरमिति वाच्यम् , स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात्; निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, किं तु निषेध्यापेक्षया न्यूनसत्ताकत्वम् , प्रकृते च तुल्यसत्ताकत्वात् कथं न विरोधः । न च मनोऽवच्छिन्नं जीवरूपं ब्रह्मरूपं वा चैतन्यं अविद्यावच्छिन्नं ब्रह्म वा स्वाप्नाध्यासाधिष्ठानमिति तद्धीरेव स्वाप्नबाधः, न तु स्वाप्नाभावधीः अधिष्ठानाविषयकत्वात् , स्वाप्नस्य प्राति-

भासिकत्वेन अज्ञानविषयतानवच्छेदकत्वात् इति वाच्यम्, अत्रत्यबाधशब्देन मिथ्यात्वस्य विवक्षितत्वात्; अत एव स्वाप्नार्थस्वाप्ननिषेधयोः अन्योन्याबाध्याबाधकत्वलक्षणमपि तुल्यसत्ताकत्वं निष्प्रत्यूहम् ; न च निषेधस्य निषेधे प्रतियोगिनो निषेधाधिकसत्त्वापत्तिरिति वाच्यम्, यदीय-यन्निषेधान्यूनसत्ताकत्वे सति यन्निषेधप्रतियोगिको यो निषेधः स तन्न्यूनसत्ताकतन्निषेधप्रतियोगिक इत्यत्र तदवृत्तिधर्मा-वच्छिन्नप्रतियोगिताकत्वस्य उपाधित्वात् ; लौकिकपरमार्थ-रजतादिनिष्ठरजतत्वप्रतियोगिकरजतत्वाभावान्यूनसत्ताकता--दृशाभावस्य निषेधे रजतत्वन्यूनसत्ताकरजतत्वाभावप्रतियोगि-के उक्तोपाधेः साध्यव्यापकत्वात् ; पक्षे साधनाव्यापकत्वाच्च ; यथाश्रुतन्नियमे प्राचीनमते घटात्यन्ताभावान्यूनसत्ताके घट-तदत्यन्ताभावान्यतरत्वावच्छिन्नाभावे घटध्वंसकालस्थायिनि घटन्यूनसत्ताकतदत्यन्ताभावप्रतियोगिकत्वाभावेन व्यभिचा-राच्च ; तत्र हि निषेधस्य निषेधे इत्यादिमूलस्याप्ययमेवार्थः— निषेधस्य यत्प्रतियोगिकयन्निषेधस्य निषेधे यन्निषेधान्यून-सत्ताके निषेधे प्रतियोगिनः तत्प्रतियोगिनः सत्त्वं निषेधा-पेक्षया अधिकसत्ताकत्वं प्रतियोगिसत्त्वं व्यवस्थाप्यते प्रतियो-ग्यात्मकः तद्व्याप्यो वा निषेधनिषेधो विषयीक्रियते न तु नि-

षेधमात्रं निषिध्यते न तूक्तप्रतियोग्याद्यनात्मको निषेधनिषेधो विषयीक्रियते ; अभिप्रायं स्फुटीकरोति——यत्र त्वित्यादिनेति । अत्र पक्षे घटादिमिथ्यात्वानुरोधेन तदधिकरणे घटत्वादिना तदत्यन्ताभावाभ्युपगमो नावश्यकः, सर्वदृश्यसाधारणयत्किंचिद्रूपावच्छिन्नाभावस्य लौकिकपरमार्थसर्वदृश्याधिकरणे ब्रह्मणि स्वीकारमात्रेण दृश्यमिथ्यात्वोपपत्तेः; तथा च यथामतं निषेधनिषेधान्तरस्य प्रतियोग्यात्मकत्वमधिकरणात्मकत्वमतिरिक्तत्वं वेति नाग्रहः ; अतात्त्विकं प्रपञ्चनिषेधादिकं अतात्त्विकत्वेन बोधयन्त्याः श्रुतेः अप्रामाण्यं च न शक्यशङ्कम्— इति चेत्; न, भ्रमकालाप्रतीतस्य सापेक्षस्य दृश्यान्ताभावस्य भ्रमकालप्रतीतनिरपेक्षब्रह्मात्मकत्वासंभवात्; न च अभावस्य सापेक्षत्वं मायिकं ब्रह्मणो निरपेक्षत्वं तात्त्विकमिति न विरोध इति वाच्यम्, मिथ्यात्वसिद्धेः प्राक् मायिकामायिकविभागस्यासंभवात् ; स्वाप्रार्थबाधकस्य निषेधस्य हि ततोऽधिकसत्ताकत्वं स्यादेव ; न हि वल्मीके प्रतीतस्य पुरुषत्वस्य तत्रैव प्रतीतेन स्थाणुत्वेन बाधः किं तु वल्मीकत्वप्रकारकज्ञानेन ; तथा च स्वाप्रार्थस्य स्वाप्रनिषेधेन निवृत्तिरेव न तु बाधः ; वस्तुतस्तु स्वाप्रनिषेधस्य जाग्रति अबाध्यत्वनिश्चयेन न तस्य बाध्यत्वम् ; न च

स्वप्रदृष्टत्वमात्रेण निषेधस्य बाध्यत्वमिति युक्तम्, स्वप्रदृष्टस्यात्मादेरपि बाध्यत्वापत्तेः; न च 'अदृष्टो द्रष्टा' इति श्रुत्या स्वप्रदृष्टत्वमेव आत्मनो नास्तीति न बाध्यत्वापत्तिरिति वाच्यम्, 'अदृष्टः' इत्यस्य वृत्तिभिन्नानुभवस्य अविषय इति त्वयैव व्याख्यातत्वात्; अन्यथा वृत्तेरप्यविषयत्वे यथा हि जाग्रत्स्वप्नगतोऽयमहमस्मि इमानि भूतानि चेति विजानाति नैवं सुप्तः किंचिदपि वेदयते इति भामत्युक्तं विरुध्येत; निषेधस्येत्याद्ययुक्तम्, निषेधस्य निषेधे प्रतियोगितुल्यसत्ताकत्वासंभवात्; रजतवति प्रतीतस्य रजतनिषेधस्य निषेधे रजततन्निषेधयोः विषमसत्ताकत्वनियमदर्शनात्; समसत्ताकत्वे हि बाधकतायां विनिगमनाविरहप्रसङ्गश्च; एवं तत्र हि निषेधस्य निषेधे इत्याद्यपि अयुक्तम्, अत्यन्ताभावतत्प्रतियोगिनिखिलवृत्तिमद्वृत्तिधर्मस्य दृश्यत्वादेः निषेध्यतावच्छेदकत्वासंभवात्, न हि घटतदभाववृत्तिधर्मस्य तन्निषेधप्रतियोगितावच्छेदकत्वम्; एकस्मिन्नधिकरणे भावाभावोभयबोधकवाक्यवदुभयोः अभावस्य तद्तात्त्विकत्वस्य च बोधकवाक्यम् अप्रमाणं स्यादेवेति चेत्;

नैवम्, मिथ्यात्वघटकनिषेधस्य स्वाधिकरणीभूतब्रह्मात्मनः सदात्मना भ्रमकालप्रतीतत्वेन भ्रमकालाप्रतीतत्वस्य असि-

द्धेः। सापेक्षत्वनिरपेक्षत्वे च रूपभेदमादायैकत्राप्युपपद्येते, अन्यथा प्रतियोगिप्रतीतिसापेक्षस्य भेदादेः तन्निरपेक्षद्रव्यात्मकत्वस्य च परमतेऽप्यनुपपत्तिप्रसङ्गात्। न च निर्विशेषे रूपभेदानुपपत्तिः, आविद्यकस्य तस्य तत्रापि संभवात्। विस्तृतं चैतत् शास्त्रारंभसमर्थने। न चैतदनुमानात्पूर्वं आविद्यकत्वस्यासिद्ध्या तदनुपपत्तितादवस्थ्यं शङ्क्यम्, एतदनुमानात्पूर्वं निर्विशेषत्वस्य अप्रसिद्ध्या त्वदीयशङ्काया अप्यनवकाशात्, मन्मतरीत्या मां प्रत्यनुयोगे च दत्तमुत्तरम्। न हि वल्मीके इत्याद्यप्ययुक्तम्, स्वाप्ननिषेधज्ञानेन समूलस्वाप्नपदार्थोच्छेदस्य पूर्वमनुक्तत्वात्, स्वाप्ननिषेधस्य जाग्रत्यबाध्यत्वनिश्चयेऽपि अभावस्याधिकरणात्मकत्वमते स्वाप्नपदार्थतदभावयोः समानसत्ताकत्वेऽपि यथा मिथ्यात्वनिश्चयः तथा एकाधिकरणवृत्त्यभावप्रतियोगिनोः तुल्यसत्ताकत्वेऽपि तत्संभवतीत्यस्य निदर्शितत्वात्। परस्यापि भेदवदत्यन्ताभावस्य अधिकरणात्मकत्वस्वीकार एव युक्तः, अन्यथा भेदस्यापि अतिरिक्तत्वापातात्। यत्तु भेदस्याधिकरणान्यत्वे तद्भेदस्यापि तथात्वापत्तिः एवं तद्भेदस्यापि इत्यनवस्थावारणाय भेदस्य अनतिरिक्तत्वेऽपि नात्यन्ताभावस्य तथात्वं अनवस्थाद्यप्रसरादिति, तन्न, अत्यन्ताभावस्याप्यतिरिक्तत्वे तत्त्वात्यन्ताभावतत्त्वात्यन्ताभावादेरपि अतिरिक्त-

त्वापत्तिरित्यनवस्थायाः तुल्यत्वात् । प्रपञ्चितं चैतदन्यत्र । रजतवतीत्याद्यप्ययुक्तम् , स्वाप्रार्थतदभावयोः समसत्ताकयोरपि अधिकरणात्मकाभाववादिमते एकाधिकरणवृत्तितायाः निदर्शितत्वात् । यत्राधिकरणे प्रतियोग्यभावौ समसत्ताकौ तत्र द्वयोरेव मिथ्यात्वनिश्चयस्य अप्रत्यूहतया उक्तबाधकतायां विनिगमनाविरहस्येष्टत्वाच्च । अत्यन्ताभावतत्प्रतियोगीत्याद्यपि न युक्तम्, प्रमेयमात्रस्य कालिकादिसंबन्धेन आत्मादौ निषेधदर्शनात् । प्रतियोगितावच्छेदकसंबन्धेन तद्धर्मविशिष्टाधिकरणे तेन संबन्धेन तद्धर्मावच्छिन्नाभावो व्याप्यवृत्तिर्न दृष्ट इति चेत्, मादर्शि, न हि सर्वात्मना दृष्टजातीयमेव श्रुत्यनुमानाभ्यां बोधनीयमिति अस्ति नियमः, करचरणादीनां नित्यत्वव्यापकत्वादेः परस्पराभेदादेश्च क्वाप्यदर्शनेन तव तदसिद्ध्यापत्तेः । भवान्तरीयपदार्थस्मरणस्य अस्मदादिषु क्वाप्यदर्शनेन बालानां स्तन्यपानप्रवृत्त्या तद्धर्मिकेष्टसाधनतास्मरणासिद्धिप्रसङ्गाच्च । श्रुतिबलवत्तर्कानुगृहीतानुमानयोः दृष्टविरुद्धसाधकत्वे च तुल्यं प्रकृतेऽपि । भावाभावयोरित्यादिकमपि न युक्तम्, वह्निविरुद्धाभाववति वह्निवैशिष्ट्यावगाहिनो निर्वह्निर्वह्निमानित्यादिवाक्यजन्यबोधस्य आहार्यत्वेन प्रामाण्यासंभवेऽपि विरोधानवगाहिनः कपिसंयोगतदभावावेतद्वृक्षवृत्तिनौ तदुभयाभावावपि

तथेत्यादिवाक्यजन्यबोधस्य प्रामाण्यवत् दृश्यविरोधानवगाहिन्या दृश्यवति रूपान्तरेण दृश्यं नास्ति इति श्रुतिजन्यबोधस्य अप्रामाण्यायोगात्। एवं तयोरतात्त्विकत्वबोधनेऽपि न तत् स्वाप्रार्थतदभावयोः एकाधिकरणवृत्तित्वोः अतात्त्विकत्वबोधकवाक्यस्येव प्रामाण्यसिद्धेः। श्रुतेः तात्त्विकप्रामाण्यं च दृश्यात्यन्ताभावाद्युपलक्षितब्रह्मबोधपरत्वमादायैव निर्वाह्यम्। तथा च प्रतिपन्नोपाधिनिष्ठस्वान्यूनसत्ताकाभावप्रतियोगित्वं मिथ्यात्वम् इति न किंचित् अनुपपन्नम् ॥

यद्वा प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं विनाशिनिष्ठं यत् अप्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तयोरन्यतरवत्त्वं प्रतिपन्नोपाधीत्यादेरर्थः। अत्र च शुक्तिरूप्यादेरनिर्वाच्यतासाधनानन्तरमेव उक्तानुमानस्य प्रवर्तनीयतया एतदनुमानात् पूर्वं ब्रह्मान्यविषयकज्ञानजन्यनाशप्रतियोग्यज्ञानप्रयुक्तस्य भ्रमादेः प्रातिभासिकशब्दार्थस्य तदन्यत्वरूपाप्रातिभासिकत्वस्य च मध्वमते प्रसिद्धत्वेऽपि तत्र स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्याप्रसिद्धया दृष्टान्तस्य साध्यविकलतेति दूषणस्य नावकाशः। किं च मध्वं प्रति स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वमेव 'साध्यम्।

तेन प्रातिभासिकस्य अत्यन्ताभावादेरनभ्युपगमेन उक्तरीत्या सिद्धसाधनादेः उपन्यासादेः अयोगात् । मद्रीत्योक्तसाध्यस्य पारमार्थिकत्वाविरोधित्वेऽपि तद्रीत्या तस्य तथात्वानपायात् । यदि च अस्मद्रीत्यापि साध्यस्य पारमार्थिकताविरोधित्वमावश्यकम् अन्यथा सिद्धसाधनताया अभावेऽपि अर्थान्तरता दुर्वारैवेत्युच्यते, तथापि मिथ्यात्वघटकात्यन्ताभावे प्रातिभासिकान्यत्वविशेषणस्य उपादानात् नासंगतिः । प्रातिभासिकत्वं च परमते सत् अलीकं वास्तु उभयथापि तदन्यत्वं नाप्रसिद्धम् । न च स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावे प्रातिभासिकान्यत्वनिवेशो न संभवति अधिकरणात्मकाभाववादिमते शुक्तिरजतादावारोपिते रङ्गे साध्याभावत्वेन हेतोर्व्यभिचारात् इति वाच्यम्, तादृशरङ्गादेः प्रामाणिकत्वे स्वप्रकारकधीविशेष्यताव्यापकाप्रातिभासिकात्यन्ताभावाप्रतियोगित्वप्रातिभासिकान्यत्वोभयाभावस्यैव प्रतियोगित्वान्तेन विवक्षणीयतया उक्तदोषानवकाशात् । प्रातिभासिकान्यत्वस्य पक्षविशेषणकोटौ निवेशाच्च न प्रातिभासिकत्वमादाय अर्थान्तरता ॥

यद्वा पारमार्थिकव्यावहारिकान्यतरानिष्ठं यत् प्रातिभासिकाभावप्रतियोगित्वं यच्चाविनाशिनिष्ठव्यावहारिकाभा-

वप्रतियोगित्वं तदन्यत् स्वसमानाधिकरणाभावप्रतियोगि-त्वम् उक्तवाक्यार्थः। अत्र अन्यतरान्तेन व्यावहारिकेत्यनेन च ब्रह्मान्यविषयकज्ञानाबाध्यस्य प्रातिभासिकशब्देन ब्रह्मान्यविषयकज्ञानजन्यनाशप्रतियोग्यज्ञानप्रयुक्तस्य च विवक्षणात् नानुमानात् प्राक् सत्त्वभेदासिद्धिनिबन्धनो दोषः। वस्तुतः परमते तादृशप्रतियोगिताद्वयस्य सत्त्वे अलीकत्वेऽपि वा तद्भेदस्य प्रामाणिकतया नाप्रसिद्ध्यवकाशः। न चात्र साध्यवैकल्यम् स्वाधिकरणेत्यनेन स्वनिरूपितत्वस्वसजातीयनिरूपितत्वोभयाभाववदधिकरणतावतो विवक्षणात्। साजात्यं च कालसंबन्धित्वतदभावान्यतररूपेण बोध्यम्। शून्यवादापत्तिवारणाय सत्तादात्म्यमपि पक्षविशेषणमुपादेयम्। स्वाधिकरणसन्निष्ठेत्यादि वा वाच्यम्। न चैवमपि शुक्तिरजतादेरलीकतया अविनाशित्वेन तन्निष्ठात् उक्ताभावप्रतियोगित्वात् अन्यस्य तन्निष्ठाभावप्रतियोगित्वस्याप्रसिद्ध्या साध्यवैकल्यं दुर्वारमिति शङ्क्यम्, अविनाशीत्यनेन कालसंबन्धित्वविशेषितस्य अविनाशिनो विवक्षितत्वात्॥

ननु 'नेह नानास्ति' इत्यादिश्रुत्यर्थे विवदमानं प्रति तन्निर्णयायैतत्साध्यादर इति ते मतम्, व्याख्याता च

त्वया सा श्रुतिरित्थम्—— नेह नानेत्यत्र इहेति पदेन विनाशिदृश्यविशिष्टं बोध्यते, विनाशिदृश्यविशिष्टे च ब्रह्मणि नाना किंचनेति पदाभ्यां उपात्तस्य आत्मभिन्न-दृश्यस्य अत्यन्ताभावो नञा बोध्यते; तथा च उक्तश्रुत्या जगति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वलाभ इति; तन्न युक्तम्, विनाशिदृश्यविशिष्टस्य मिथ्यात्वेन उक्तनिषेधाधिकरणत्वासंभवात्; दृश्याधिष्ठाने हि दृश्यस्य निषेधः त्वया वाच्यः; अधिष्ठानं तु अध्यस्ताधिकसत्ताकमेव स्यात्; न च स्वप्ने आरोपितरजताधिष्ठानस्य शुक्त्यादेरध्यस्ताधिकसत्ताकत्वं नास्ति स्वप्ने प्रतीतस्य सर्वस्य प्रातिभासिकत्वात् इति वाच्यम्, प्रातीतिकस्य अज्ञानाविषयस्य अधिष्ठानत्वासंभवात्, सामान्यतो ज्ञातं विशेषतश्च अज्ञातं हि अधिष्ठानं भवति; अत एव नेदं रजतमिति स्वप्नज्ञानस्य बाधकत्वमपि असंभवि; भ्रमकाले अज्ञातस्य अधिष्ठानतत्त्वज्ञानमेव हि बाधकं दृष्टम्; किं च यथेदं भूतलं घटवदिति एकभूतलविषयकज्ञानस्य नेदं भूतलं घटवदिति भूतलान्तरविषयकज्ञानस्य च न बाध्यबाधकभावोऽस्ति भिन्नविशेष्यकत्वात्। तथा स्वाप्निकयोरिदं रजतं नेदं रजतमिति ज्ञानयोः न बाध्यबाधकभावः; प्रातीतिके धर्मिरूपविशेष्ययोः ज्ञानभेदेन भिन्नत्वादिति चेत्; न, दृश्य-

तादात्म्यापन्नस्य सतोऽनिर्वाच्यत्वेऽपि तत्र श्रुत्या दृश्यनिषेधबोधने बाधकाभावात् । न हि वेदान्तिभिरधिष्ठानातिरिक्ते भूतलादौ घटाद्यभावो न स्वीक्रियते । किं च अविद्याविषयत्वोपहितस्यैव अधिष्ठानतया दृश्यतादात्म्यवत्तया च तत्र तन्निषेधे त्वदिष्टस्यापि न क्षतिः । अधिष्ठानस्य अध्यस्ताधिकसत्ताकत्वमध्यस्तबाधकाबाध्यस्वीयकेवलरूपकत्वरूपमप्रत्यूहम् । अन्यादृशाधिकसत्ताकत्वनियमश्च अप्रयोजकः । अपि च शुद्धस्यैव प्रपञ्चाधिष्ठानत्वेऽपि न क्षतिः, उपहितरूपस्यैव जगदुपादानतया तन्निष्ठात्यन्ताभावप्रतियोगित्वमात्रेण जगन्मिथ्यात्वसिद्धेरप्रत्यूहत्वात् । अस्तु वा 'नेह नाना' इति वाक्येनापि शुद्धस्यैव ब्रह्मणो बोधः । तत्र हेति शब्दोपात्तदृश्यतादात्म्योपलक्षितब्रह्मवृत्तित्वस्य दृश्यात्यन्ताभावे बोधनमात्रेण विवक्षितार्थसिद्धेः । तद्धर्मावच्छिन्नविषयताकबुद्धावेव तदुपहितविषयकत्वस्वीकारात् । अधिकमुक्तम्, वक्ष्यते च । स्वाप्नशुक्त्यादेः स्वाप्नरजताधिष्ठानत्वं तु नास्माकमनुमतम् । केचित्तु प्रातिभासिकस्यापि अनुभवानुरोधेन अज्ञानविषयतावच्छेदकत्वमङ्गीक्रियते; न चाज्ञानविषयतानवच्छेदकत्वरूपप्रातिभासिकत्वक्षतिः, तत्तदज्ञानान्याज्ञानविषयतानवच्छेदकत्वस्यैव प्रातिभासिकत्वशरीरे निवेशात्; एवं च स्वाप्नरजताद्यभावावच्छिन्नशुक्त्यादेरज्ञानविषयतावच्छेदकत्वरूपमधिष्ठान-

त्वं निरपवादम् ; अज्ञानविषयत्वतदवच्छेदकत्वान्यतररूपवत्त्वस्यैव अधिष्ठानतारूपत्वादिति प्रातिभासिकविशेषस्याप्यधिष्ठानत्वमुपपादयन्ति । किं चेत्यादिकमप्ययुक्तम् , इदं रजतं नेति स्वप्नकल्पितेदमर्थस्यैव यत्र रजतत्वेनानुभवकाले प्राक्स्वा रजताभिन्नत्वेन अनुभूतमिदम् इत्यनुभवः, तत्रेदमंशस्य प्रत्यभिज्ञाबलात् ऐक्योपगमे क्षत्यभावात् । अन्यथा जाग्रत्यपि तदनुपपत्तेः ॥

उक्ताभावश्च व्याप्यवृत्तित्वेन विशेषणीयः, तेन नाव्याप्यवृत्तितामादाय अर्थान्तरम् । प्रतियोगिता च स्वन्यूनवृत्तिधर्मानवच्छिन्ना ग्राह्या । तेन व्यधिकरणधर्मावच्छिन्नाभावमादाय उभयाभावादिकमादाय च नार्थान्तरम् । न चैवमपि विशिष्टाभावमादाय अर्थान्तरं दुर्वारमेवेति वाच्यम्, विशिष्टाभावप्रतियोगितायाः शुद्धे अनभ्युपगमात् । अभ्युपगमेऽपि वा तस्या व्यासज्यवृत्तित्वोपगमेनाव्यासज्यवृत्तिप्रतियोगिताया एव विवक्षणीयत्वाच्च । अव्यासज्यवृत्तित्वस्याप्युपगमे स्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगित्वान्यूनवृत्ति यत् तदवच्छेदकं तद्धरवस्यैव विवक्षणीयतया उक्तदोषानवकाशात् । एवं स्वव्यधिकरणसंबन्धानवच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया । तेन न व्य-

धिकरणसंबन्धावच्छिन्नाभावमादय अर्थान्तरम् । न च श्रुत्यादिसिद्धोत्पत्तिकस्य अर्थक्रियासमर्थस्य अविद्योपादानकस्य तत्त्वज्ञानबाध्यस्य वियदादेः रूप्यादेश्च धीकाले विद्यमानेन असद्विलक्षणस्वरूपेण निषेधो न युक्तः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना अभावस्य विरोधादिति वाच्यम्, संयोगादेरव्याप्यवृत्तित्वनये तत्रैवोक्तनियमव्यभिचारात् । व्याप्यवृत्तेस्तादृशाभावस्य प्रतियोगिविरुद्धत्वनियमो न व्याहत इति चेत्, प्रत्यक्षानुरोधेन व्याप्यवृत्तेरिति विशेषणवत् श्रुतितन्मूलकानुमानाद्यनुरोधेन ऐन्द्रियकत्वसभावे अप्रातिभासिकनिरूपितत्वं च अधिकरणतायां विशेषणमस्तु । अस्तु च प्रत्यक्षानुरोधेन अभावः प्रतियोगिविरुद्ध इति नियमस्येव श्रुत्याद्यनुरोधेन व्याप्यवृत्तिः अभावोऽपि प्रतियोगिविरुद्ध इति नियमस्यापि परित्यागः । उक्तं च 'विरुद्धमिति नः क्व संप्रत्ययः' इति । उत्पत्त्यादिमत्त्वस्योक्तमिथ्यात्वेन विरोधस्तु असिद्धः । अन्यथा अत्यन्तासति व्यतिरेकसहचारदर्शनस्य अविशिष्टतया मिथ्यात्वाभावस्योत्पत्तिव्याप्यतापत्त्या नित्यत्वेन त्वदभिमतस्य वियदादेरपि मिथ्यात्वापत्तेः दुर्वारत्वापातात् । प्रमाणान्तरविरोधाविरोधसहकृतेन सहचारदर्शनादिना नियमविशेषत्यागाङ्गीकारौ च ममाप्यविशिष्टाविति यत्किंचिदे-

तत् । एवमिदं रजतमिति भ्रमानन्तरं अधिष्ठानतत्त्वसाक्षात्कारे रौप्यमत्र नास्ति नासीत् न भविष्यति इति स्वरूपेणैव निषेधप्रतीतेः असत्ख्यातेरसंभवेन शुक्तिरजतादेरुत्पत्तिसिद्धौ तत्रापि तादृशव्याप्तिभङ्गो द्रष्टव्यः । न च तत्र लौकिकपरमार्थरजतमेव तादृशनिषेधप्रतियोगीति वाच्यम्, भ्रमबाधयोर्वैयधिकरण्यापत्तेः अप्रसक्तप्रतिषेधापत्तेश्च न चैवं त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति मतहानिः स्यादिति वाच्यम्, अस्याचार्यवचसः आपणस्थरूप्यवृत्तिना व्यावहारिकेण रजतत्वेन गृह्यमाणं प्रातिभासिकं रूप्यं स्वरूपेण पारमार्थिकत्वाकारेण वा उक्तनिषेधप्रतियोगीत्यर्थकत्वात् । एतावदुक्तिश्च, पुरोवृत्तिप्रातिभासिकरजतमात्रवृत्तिना रजतत्वेनैव रजतं प्रतीयत इति मतनिरासार्थं लौकिकपारमार्थिकेन रजतत्वादिनापि तत् प्रतीयत इति प्रतिपादयितुम् । अन्यथा इष्टतावच्छेदकत्वेन गृहीतधर्मप्रकारकज्ञानासंपत्त्या भ्रमात् प्रवृत्त्यादिकार्यानुत्पत्तेः । तदुक्तं तत्त्वदीपिकायाम्—'तस्मात् लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगि' इति पूर्वाचार्याणां वाचोयुक्तिस्तु पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकपरमार्थरजतत्वेन अपरोक्षतया प्रतीतस्य लौकिकपरमार्थरजतमिदं

कालत्रयेऽपि न भवतीति निषेधप्रतियोगितामादृत्य नेतव्या इति । अयं भावः— एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वस्य व्युत्पत्तिसिद्धत्वात् घटः पटो नेति वाक्यवत् रजतत्वेन साक्षात्कृतं पुरोवर्ति लौकिकपरमार्थरजतं नेति वाक्यस्यान्योन्याभावबोधकत्वे सिद्धे अभिलापजन्यप्रतीतिसमानाकारत्वात् अभिलप्यमानप्रतीतेः लौकिकपरमार्थेन रजतत्वादिना साक्षात्कृतं इदं न लौकिकपरमार्थरजतमिति तादृशसाक्षात्कारविषयेदंत्वावच्छेदेन उक्तभेदबोधपरवाक्याभिलप्यमानप्रतीतेरन्योन्याभावविषयकत्वमेव सिध्यति । तथा च इदंशब्दनिर्दिष्टे प्रातीतिकरजते उक्तरजतशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभावप्रतीतेरार्थिकं मिथ्यात्वम् । नात्र रजतमिति वाक्याभिलप्यप्रतीतेश्च रजतत्वेन रजतसामान्याभावविषयकत्वात् कण्ठोक्तमेव मिथ्यात्वमित्यतो नापसिद्धान्तो नाप्यन्यथाख्यातिः न वा ग्रन्थविरोधः ॥

यत्तु प्रातिभासिकरजते व्यावहारिकरजततादात्म्यारोपो न युक्तः, विषमसत्ताकयोरन्योन्यस्मिन् अन्योन्यस्य तादात्म्येन भाने एकस्यापराज्ञानकार्यत्वनियमात् स्वोपादानाज्ञानविषय एव तादात्म्यारोपाच्च; अन्यथा पुरोवृत्तितत्त्वाज्ञाने-

ऽपि व्यावहारिकरजततत्त्वज्ञाने प्रातिभासिकरजतस्य निवृत्तिः स्यात्; किं च प्रातिभासिके उपनायकाभावात् कथं व्यावहारिकतादात्म्यारोपः; तत्प्रतीत्यङ्गीकारे अन्यथाख्यात्यापत्तिरेवेति यथाश्रुतमूलदूषणम्; तन्न, प्रातिभासिके व्यावहारिकरजतभेदस्यावृतत्वेन तादात्म्यारोपस्य सुलभत्वात् । सामग्र्याः अनुभवस्य च सत्त्वे समसत्ताकयोः तादात्म्यारोपस्येव विषमसत्ताकयोरपि तादात्म्यारोपस्य संभवेन उक्तनियमस्याप्रयोजकत्वात् । प्रातीतिके तदुत्पत्तिकालोत्तरं उत्पन्नेन दूरत्वादिदोषेणासंनिहितस्य अनधिष्ठानस्यापि व्यावहारिकस्य तादात्म्यारोपदर्शनाच्च । एकत्र तादात्म्येनारोपितस्य प्रातीतिकस्य अन्यत्र तादात्म्येनारोपो न संभवतीति प्रलापस्तु न श्रद्धेयः, निर्युक्तिकत्वात् । न च शुक्तावारोपितस्य रजतस्य रङ्गेऽपि तादात्म्यारोपस्वीकारे तत्त्वज्ञानमात्रादपि तन्निवृत्तिप्रसङ्ग इति वाच्यम्, तत्त्वज्ञानस्य स्वसमानविषयकाज्ञाननिवृत्तिद्वारा तत्कार्यस्यैव निवर्तकतया प्रथमं शुक्तावारोपितस्य रजतस्य रङ्गाज्ञानकार्यतया तत्त्वज्ञाने तन्निवृत्त्यापादनस्य व्यधिकरणत्वात् । तत्कार्यरजततादात्म्यनिवृत्तेश्च इष्टत्वात् । स्मरणाद्युपनायकसंभवेन किंचेत्यादेरयुक्तत्वाच्च । यत्त्वयमभिप्राय इत्याद्यशुद्धं प्रत्यक्षानुभवविचारे शब्दस्वभाववर्णनस्य अनुपयोगादिति, तन्न, लौकिक-

परमार्थरजतमेव नेदं रजतम् इति निषेधप्रतियोगीत्यादिपूर्वाचार्यवचनस्य नेदं लौकिकपरमार्थरजतमित्याकारकशब्दाभिलप्यमानानुभवविषयनिषेधप्रतियोगितातात्पर्यकस्य शब्दस्वभाववर्णनं विना स्वाभिमतपक्षे स्वाचार्यवचनविरोधपरिहारासंभवात् । तस्मात् तस्याशुद्धत्वं प्रलपता स्वस्यापाण्डित्यमेव प्रकटितम् ॥

अथैवं शुक्तिरजतादेरुत्पत्तिनाशस्वीकारे इदं रूप्यमुत्पन्नं नष्टं चेति धीप्रसङ्गः, त्रैकालिकनिषेधप्रतीतिश्च न स्यादिति चेत्, न । उत्पादविनाशप्रतीतिरियं प्रतिभाससमये आपाद्यते बाधसमये वा ? नाद्यः, पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव प्रतिबन्धकत्वात्; विरोधिज्ञानानुदये रूप्यस्य अविनाशाच्च । नापरः, त्रैकालिकनिषेधप्रतीतेरेव तत्प्रतिबन्धकतया तादृशनिषेधग्रहे उत्पत्त्यादिग्रहस्य अनुत्पत्तेः ।

यत्त्वेवं सति घट उत्पन्नो घटो नष्ट इत्यादिप्रतीतेरप्यपलापप्रसङ्गः । तथा हि—इयं प्रतीतिः भ्रान्तिसमये वा स्यात् बाधसमये वा; नाद्यः, अनुत्पन्नाविनष्टब्रह्मस्वरूपाभिन्नतया ग्रहस्यैव प्रतिबन्धकत्वात्; विरोधिब्रह्मज्ञानोदयपर्यन्तं घटाद्यवस्थितिप्रसङ्गाच्च; नापरः, अत्य-

न्ताभावग्रहस्यैव प्रतिबन्धकत्वादिति । तदसत्— इदं रजतमिति भ्रमस्थले इदानींतनोत्पत्तिमत्त्वादिव्यावर्तकेन इदानींतनोत्पत्त्यादिशून्यत्वेन गृह्यमाणशुक्त्याद्यभिन्नत्वेन ग्रहवत् सन् घट इत्यादौ भासमानसद्रूपे अनुत्पन्नत्वादेः अगृहीतत्वेन उत्पत्त्यादिमत्त्वग्रहविरोधिनः तद्व्यावर्तकधर्मवत्तानिश्चयस्य अभावेन घटादावुत्पत्त्यादिमत्त्वग्रहे बाधकाभावात् । विरोधिब्रह्मज्ञानेत्यादिकमप्ययुक्तम्, बाधात् पूर्वं रूप्यनाशस्याभावेन विषयाभावान्न तत्प्रत्यक्षापत्तिरित्युक्ते उक्तब्रह्मज्ञानपर्यन्तं घटाद्यवस्थित्यापादनस्य व्यधिकरणत्वात्, अप्रयोजकत्वाच्च ॥

यद्यपि प्राचीनतार्किकमते अत्यन्ताभावप्रागभावादीनां परस्परविरोधित्वात् परस्परवत्तानिश्चयस्य परस्परवत्ताज्ञानविरोधित्वमस्ति, तदभिप्रेत्यैव हि परेण त्रैकालिकनिषेधप्रतीतिश्च न स्यादित्युक्तम् , तदनुसृत्य चाचार्यैः अत्यन्ताभावग्रहात् न ध्वंसग्रह इति प्रतिपादितम् ; परमार्थतस्तु सिद्धान्ते प्रतियोगिनेव ध्वंसादिनापि नात्यन्ताभावस्य विरोध इति न तद्वत्ताज्ञानं ध्वंसग्रहे प्रतिबन्धकम्, तथा च शुक्तिरूप्यं नष्टम् इत्यापत्तिः दुर्वारा ; तथापि शुक्तिरजतादिप्रातिभासिकध्वंसाननुभवात् तद्ध्वंस-

स्येन्द्रियाद्ययोग्यत्वं कल्प्यत इति न तत्प्रत्यक्षापत्तिः । यदि च शुक्तिरजतादीनां ध्वंसो नोपेयते, अधिष्ठानसत्त्वनिश्चयानन्तरं तत्समानविषयकाज्ञानतत्प्रयुक्ताननुवृत्तेरेव उच्छेदशब्दार्थत्वात् इति विभाव्यते तदा न काचित् अनुपपत्तिः। अधिकमग्रे वक्ष्यामः । एवं चोक्तरीत्या शुक्तिरजतादेः ध्वंसादिप्रत्यक्षानुपगमेऽपि सार्वजनीनस्य घटो ध्वस्त इत्यादिप्रत्यक्षस्य अपलापो न युक्तः । अथैवमपि आरोप्यधर्मस्य उत्पत्त्यादेरधिष्ठाने प्रतीतिरुचितेति चेत्, न, यद्रूपविशिष्टस्यारोप्यता तद्रूपवत्त्वेनैव अधिष्ठानं भासते, उत्पत्त्यादिमत्त्वं तु मिथ्यात्वादिवत् आवृतत्वात् नावच्छेदकम् । अन्यथा त्वदभ्युपगतं रूप्यादिनिष्ठं असत्त्वमपि तथा स्यात् । यत्तु उत्पत्त्यादेः ब्रह्मभिन्नस्य कल्पितत्वेन नावृतत्वं संभवतीति, तन्न, जडे आवरणकृत्याभावेन अज्ञानविषयत्वानभ्युपगमेऽपि अज्ञानविषयतावच्छेदकत्वादिरूपस्य तस्य सिद्धान्ते अविरुद्धत्वात् । प्रपञ्चयिष्यते चैतत् आवरणकृत्यनिरूपणे ॥

नन्वनिषिद्धत्वस्य उत्पत्त्याद्यप्रयोजकत्वे किं तत्प्रयोजकनियतं चेत् व्यापकं चेत् ज्ञेयत्वादिव्याप्यं चेत् घटत्वादिसममिति चेत् प्रागभावप्रतियोगित्वादि तदवच्छिन्नजनकतावच्छेदकं चेत् न किंचित्; स्वरूपसंबन्धात्मकप्रयोजकताशालि चेत्

सामग्रीमिथ्यात्वे तुच्छवत् अनुत्पत्त्यापत्तिरिति चेत् सत्यत्वेऽप्यात्मवत् सा कुतो न स्यात्; तस्मात् उत्पत्त्यादिसत्त्वे वस्तुस्वभावादिकमन्यदेव किंचित् नियामकम्; न च तत् दुर्निरूपम्, सत्तादात्म्यादेरेव तथात्वसंभवादिति संक्षेपः ॥

नन्वेवमत्यन्तासत्त्वापत्तिः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं हि अन्यत्र असत्त्वेन संप्रतिपन्नस्य घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वपर्यवसन्नम्, अन्यथा तेषामन्यत्र सत्त्वापातात्, न हि तेषामन्यत्र सत्तासंभवति इति त्वदुक्तेश्च; तथा च कथमसद्वैलक्षण्यम्, न हि शशशृङ्गादेरितोऽन्यत् असत्त्वम्; न च निरुपाख्यं तत्, निरुपाख्यपदेनैव ख्यायमानत्वात्; नापि अप्रतीयमानत्वम्, असतोऽप्रतीतौ असद्वैलक्षण्यज्ञानस्य असत्प्रतीतिनिरासस्य असत्पदप्रयोगस्य च अयोगात्। नापि अपरोक्षतया अप्रतीयमानत्वं तत्, नित्यातीन्द्रियेष्वतिव्याप्तेरिति चेत्, न, आपाद्यमानस्य अत्यन्तासत्त्वस्य त्रिकालसर्वदेशीयनिषेधप्रतियोगितारूपत्वे इष्टापत्तेः। इतोऽन्यत् असत्त्वं च सत्प्रतियोगिकतादात्म्यादिशून्यता निःस्वरूपत्वादिकमेव। तस्य च त्रैकालिकनिषेधप्रतियोगित्वाव्यापकत्वे बाधकाभावात्। न च स्वरूपाप्रतिक्षेपकस्य निषेधत्वं पारिभाषिकमेव स्यादिति वाच्यम्। स्वरूपपरमार्थ-

न्ताप्रतिक्षेपदक्षस्य निषेधत्वस्य पारिभाषिकत्वायोगात् । स-त्त्वेन प्रतीत्यनर्हत्वमिति मूलोक्तमत्यन्तासत्त्वमपि सत्तादा-त्म्यशून्यत्वपर्यवसितमेव । अस्तु वा तत् यथाश्रुतमेव तथापि न क्षतिः । शून्यवादपर्यवसानवारणायैव असद्वैलक्षण्यस्य सत्त्वेन प्रतीत्यर्हत्वरूपस्य साध्यादिकोटौ निवेशनीयतया कालसंबन्ध्यत्यन्ताभावाप्रतियोगिरूपाबाध्यस्य यत् तादात्म्यं तस्यैव प्रकृतलक्षणप्रविष्टसत्त्वशब्दार्थत्वेन तादृशतादात्म्यो-परक्तप्रतीतिविषयत्वस्य शून्यवादिना काप्यनभ्युपगमेन उक्त-दोषवारणसंभवात् ॥

एतेन असतः प्रतीत्यङ्गीकारे कचिदप्युपाधौ सत्त्वे-नापि प्रतीतिसंभवात् सत्त्वेन प्रतीत्यर्हत्वमात्रेण नास-द्वैलक्षण्यसिद्धिः; किं चानवच्छिन्नवृत्तिकान्यसर्वदेशवृत्ति-कात्यन्ताभावप्रतियोगित्वलक्षणात्यन्तासत्त्वस्य शुक्तिरूप्यश-शशृङ्गादिसाधारणतया तयोरेकस्य सत्तादात्म्येन प्रतीति-रन्यस्य नेत्यत्र मानाभावः; शून्यवादिनापि तादृशासद्वैलक्ष-ण्यस्य प्रपञ्चे स्वीकारात् न शून्यवादपर्यवसानमपि; शून्य-वादिभिरित्याद्यपि न सत्, सांवृतसत्त्वस्य जगति तैरपि स्वी-कारात्; वास्तवसत्त्वस्य तत्राप्यभावाच्च; 'द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना । लोके संवृतसत्त्वं च सत्त्वं च परमार्थतः' इत्यादित उक्तेश्चेति परास्तम् । उक्ताबाध्यतादात्म्योपरक्तप्रती-

तिविषयत्वस्य शून्यवादिभिरस्वीकारात् । अबाध्यत्वोपलक्षित-ज्ञानस्वरूपसत्ताया अस्माभिरभ्युपगमाच्च । 'द्वे सत्त्वे' इत्यादित उक्त्या च न शून्यतायाः परमार्थत्वं तदभिमतमिति अवगम्यते । सत्यक्षणिकविज्ञानवादानिर्वचनीयक्षणिकविज्ञानवादौ परस्परविरुद्धौ कथं बुद्धैरुपदिष्टावित्याशङ्क्य 'देशना लोकनाथानां श्रोतृचित्तवशानुगा' इति धर्मकीर्तिना समाहितत्वेन तदनुसारेण उक्तवाक्यस्यापि संवृतसत्त्वं पारमार्थिकसत्त्वं चेति यत् सत्त्वद्वयं विवक्षाभेदेन लोके जगति तदुभयमाश्रित्य विनेयबुद्ध्यनुसारेण बुद्धानां धर्मदेशना इत्यर्थस्यैव आदरणीयत्वात् ॥

किं च यदि शून्यतायाः परतःसिद्धिः, तर्हि परो वक्तव्यः, संवृतिरेवेति चेत् तथा सति विश्वशून्यतयोर्न कश्चित् विशेषः । अथ सा स्वतःसिद्धा, तर्हि स्वप्रकाशानुभवरूपायाः तस्या अबाध्यायाः पारमार्थिकत्वमेवेति शून्यतेति परिभाषामात्रं स्यात् । स्पष्टं चेदं बौद्धाधिकारे । अथोच्येत शून्यवादपर्यवसानमस्तु मा वा, तत्त्ववादिरीत्या अत्यन्तासत्त्वमापाद्यते इति चेत्, नैवम्, उक्ताभावप्रतियोगित्वस्य सत्त्वेन प्रतीयमानत्वसहितस्य त्वदभ्युपगतासत्त्वस्येष्टत्वेन आपादनानर्हत्वात्, शशशृङ्गादिप्रतीतावपि तुच्छविषयताया निराकृतत्वाच्च ॥

यत्तु अधिष्ठानस्य ज्ञानमात्रमेवारोपहेतुः, न च तत्सत्त्वमिति शून्यवादः कथं निवारणीयः; न च अधिष्ठानस्य ज्ञाततया सत्त्वासिद्धावपि अज्ञाततया सत्त्वं सिध्यति, अज्ञानस्य स्वकल्पितार्थविषयकत्वायोगात् इति वाच्यम्, सामान्यतो ज्ञातस्य विशेषतस्त्वज्ञातस्य अधिष्ठानतया, तत्त्वस्य च त्वदभिमतविश्वाधिष्ठाने निर्विशेषे स्वप्रकाशे ब्रह्मण्यसंभवात् तदन्यस्य च अज्ञानकल्पितत्वेन अज्ञानविषयत्वायोगात् त्वन्मतेऽपि भ्रमे असदधिष्ठानकत्वस्य दुर्वारत्वात्; किं च स्वाप्नशुक्त्यादौ रजतारोपाङ्गीकर्तुः तव मते अज्ञाततयापि नाधिष्ठानसत्त्वसिद्धिः, अयुक्तं च प्रातीतिकस्य स्वाप्निकस्य अज्ञानावृतत्वमपीति; तन्न, स्वप्रकाशचैतन्यस्याप्यज्ञानावृतत्वे बाधकाभावस्यान्यत्रोपपादितत्वात्, अत्रापि अग्रे उपपादयिष्यमाणत्वाच्च । स्वाप्निकशुक्त्यादेः व्यावहारिकशुक्त्यादेरिव केनचित् रूपेण अधिष्ठानतावच्छेदकत्वेऽपि आरोपप्रयोजकाज्ञानविषयत्वरूपाधिष्ठानत्वानभ्युपगमात् । न च तदवच्छिन्नचितोऽपि प्रातिभासिकतया नाधिष्ठानत्वसंभव इति वाच्यम्, प्रातिभासिकतादात्म्यापन्नतायाः तस्याः तथात्वेऽपि स्वरूपतः पारमार्थिकत्वात् । अन्यथा बाध्यसमसत्ताकैकरूपत्वेन बाधकप्रतीतिविषयत्वायोगात् । न हि समसत्ताकयोः बाध्यबाधकभावः, विनिगम-

नाविरहेण वैपरीत्यस्यापि प्रसङ्गात् । स्वाप्नरजताद्यभावात्मनः स्वाप्नशुक्त्यादेः स्वाप्नरजताभावनिश्चायकत्वेऽपि अधिष्ठानता तदवच्छेदकत्वं नास्तीति मुख्यसिद्धान्तस्य दर्शितत्वाच्च ॥

यत्तु यत्र सदेव शुक्त्यादि असद्रजतात्मना भाति स विपर्ययः यत्र तु असत् शशशृङ्गादि सदात्मना भाति स विकल्प इति 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इति पातञ्जलसूत्रस्थविकल्पविपर्ययपदयोः व्याख्यानम्, तदसत्, 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति सूत्रस्थभाष्यविरोधात् । तथा हि तत्र भाष्यम्—स न प्रमाणोपारोही न विपर्ययोपारोही, वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते, तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति यदा चितिरेव पुरुषः तदा किमत्र केन व्यपदिश्यते इत्यादि । एवम् 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' इति सूत्रभाष्यविरोधश्च । तथा हि तत्र भाष्यम्—स कस्मान्न प्रमाणं यतः प्रमाणेन बाध्यते, भूतार्थविषयत्वात् प्रमाणस्य तत्र प्रमाणेन बाधनम् बाधनमप्रमाणस्य दृष्टम्; तद्यथा द्विचन्द्रदर्शनम्, तद्विषयेणैकचन्द्रदर्शनेन बाध्यत इति । सेयं पञ्चपर्वा भवति अविद्या अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः इति एत एव स्वसंज्ञाभिः तमो मोहो महामोहः तामिस्रोऽन्धतामिस्र इति एते चित्तम-

लप्रसङ्गेन अभिधास्यन्त इति । अधिकं तु कौस्तुभे द्रष्टव्यम् ॥

अथोपाधिशब्देनाधिकरणमात्रविवक्षायाम् अर्थान्तरं वास्वाद्यधिकरणकात्यन्ताभावप्रतियोगिनो रूपादेः अमिथ्यात्वात्; अधिष्ठानविवक्षायां तु भ्रमोपादानाज्ञानविषयस्याधिष्ठानत्वेन अन्योन्याश्रयत्वम्, ज्ञानस्य भ्रमत्वे हि विषयस्य मिथ्यात्वं विषयस्य मिथ्यात्वे च ज्ञानस्य भ्रमत्वमिति; न च स्वतादात्म्येन प्रतीयमानत्वमेव प्रतिपन्नोपाधित्वमिति वाच्यम्, तत्रापि स्वतादात्म्येन प्रमितत्वं भ्रमविषयत्वं वा तदिति विकल्पेन प्रागुक्तदोषानिस्तारात्; किं च स्वसंबन्धिदृश्यनिष्ठात्यन्ताभावप्रतियोगिनि ब्रह्मणि अतिव्याप्तिः; न च निर्धर्मके तस्मिन् अभावप्रतियोगित्वरूपधर्मो नास्तीति वाच्यम्, हेतोर्भावाभावाभ्यां व्याघातात्; किं चैवं सत्यत्वादिकमपि तत्र न स्यात्, तथा च 'सत्यम्' इत्यादिश्रुतिविरोधः; न चाधिकरणातिरिक्ताभावानभ्युपगमेन उक्तमिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मस्वरूपत्वमङ्गीक्रियत इति वाच्यम्, ब्रह्मणो मिथ्यात्वाभावरूपसत्स्वरूपत्वेन तत्र सत्यत्वाभावः स्यादेवेति श्रुतिविरोधस्तदवस्थ एव; किं चोक्ताभावत्वादिविशिष्टस्य मिथ्यात्वेन तद्बोधकश्रुतेरप्रामाण्यं च स्यादिति चेत्, मैवम्, प्रतिपन्नोपाधिशब्देन स्वप्रकारकधीविशेष्यस्य विवक्षितत्वात्।

यद्वा स्वाधिकरणमेवोपाधिशब्दार्थः। अधिकं प्राग्विवेचितम् । ब्रह्मणस्त्वत्यन्ताभावप्रतियोगित्वे मानाभाव एव । तदुक्तम्— 'निर्धर्मके तस्मिन्नभावप्रतियोगित्वरूपधर्माभावात्' इति । निर्धर्मके अत्यन्ताभावप्रतियोगित्वादिधर्मवत्ताप्रयोजकप्रमाणशून्य इत्यर्थः। सत्यत्वमपि ब्रह्मणो मिथ्यात्वाभावरूपं अधिकरणात्मकं मिथ्यात्वविरोधि स्वीक्रियत एव । न च ब्रह्मणो मिथ्यात्वाभावात्मकत्वे स्वस्मिन् स्ववृत्तिविरोधेन तदभावोऽपि तत्र स्यादेवेति मिथ्यात्वं तस्य दुर्वारमेवेति वाच्यम्; गोत्वाभावे गोत्वाभावस्येव स्वस्मिन् स्ववृत्ताव-विरोधित्वात् । परं तु सा वृत्तिरनिर्वाच्या अविद्याधीना चेति विशेषः । अभावत्वाद्युपहितविषयिण्याः श्रुतेः तदंशे तात्त्विकप्रामाण्याभावेऽपि तदुपलक्षितब्रह्मांशे तादृशं प्रामाण्यं निष्प्रत्यूहमेव ॥

यद्वा पारमार्थिकत्वाकारेण तादृशनिषेधप्रतियोगित्वं तत् । नन्वेवं पारमार्थिकत्वस्य मिथ्यात्वाभावरूपतया मिथ्यात्वस्य तद्घटितत्वेन अन्योन्याश्रयः; पारमार्थिकत्वस्यापि पारमार्थिकत्वाकारेण निषेधे प्रथमपक्षोक्तानवस्थापत्तिरिति चेत्, न, सहकार्यन्तरासहकृतज्ञानजन्यनिवृत्त्यप्रतियोगित्वरूपं ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वरूपं वा कालसंबन्धित्वसहितं यद्बाध्यत्वं तद्व्यापकविषयताक-

यत्किञ्चिद्धीव्यक्तिं तद्व्यक्तित्वेनोपादाय तद्धीविषयत्वरूप-पारमार्थिकत्वस्यैव पूर्वलक्षण इव अत्रापि निवेशनीयत्वात् । यथासन्निवेशे च न वैयर्थ्यम् । एतेन सेत्वादिदर्शननिवर्त्यदुरितादौ तादृशधीविषयत्वस्याभावेऽपि पारमार्थिकत्ववत् जगत्यपि पारमार्थिकत्वोपपत्तौ अर्थान्तरं दुर्वारमिति परास्तम् । यत्तूक्ताचार्यवचनविरोधाभावेऽपि—आभासप्रसक्त्यानाभासं निषिध्यते इति, लौकिकपारमार्थिकत्वाकारेण निषिध्यत इति, प्रतीतं रजतं पारमार्थिकत्वाकारेण निषिध्यते—इत्याद्याचार्यवचनविरोधो दुर्वार इति, तदसत्, प्रतिपन्नोपाधौ स्वरूपेण निषेधतदभावयोः द्वयोरेव सिद्धान्तारूढत्वेऽपि स्वरूपेण निषेधपक्षस्यापि आचार्यसंमतत्वद्योतनाय उक्ताचार्यवचनाभिप्रायवर्णनसामञ्जस्यात्, काप्याचार्योक्त्यननुगतत्वे अपसिद्धान्ततताया दुर्वारत्वापत्तेः सर्वमवदातम् ॥

इति द्वितीयमिथ्यात्वनिरुक्तिः ॥

—*—

## तृतीयनिरुक्तिः ॥

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् । न चोत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तिः, मुद्गरपातनिवर्त्ये घटादावव्याप्तिश्चेति वाच्यम्, ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वस्य विवक्षितत्वात् । अवस्थितिश्च द्वेधा, स्वरूपेण कारणात्मना च, सत्कार्यवादाभ्युपगमात् । एवं च घटादेः स्वरूपेणावस्थित्यभावस्य मुद्गरपातादिप्रयुक्तत्वेऽपि कारणात्मना अवस्थितिसाधारणोक्तावस्थितिसामान्याभावस्य ब्रह्मज्ञानप्रयुक्तत्वात् नाव्याप्तिः । न वा सिद्धसाधनम् । अत एव न वियदादेः ब्रह्महत्यादेरिव सेतुदर्शनादिना ब्रह्मज्ञानेन नाशसिद्धावपि मिथ्यात्वासिद्ध्या अर्थान्तरम् । तुच्छस्यावस्थितिसामान्याभाववत्त्वेऽपि तस्य ज्ञानप्रयुक्तत्वाभावात् न तत्रातिव्याप्तिः । शुक्तिरजतादेरपरोक्षप्रतीत्यन्यथानुपपत्त्या प्रतिभासकाले अवस्थित्यङ्गीकारात् न बाधकज्ञानं विना तद्विरह इति न साध्यविकलता । न च घटादेरेकावस्थितिविशेषाभावस्य ज्ञानाप्रयुक्तत्वेन घटादाववस्थितिसामान्यविरहस्य ज्ञानाप्रयुक्तत्वात् विशेषाभावातिरिक्तसामान्याभावा-

नभ्युपगमे घटादावव्याप्तिर्दुर्वारैव, ज्ञानप्रयुक्तविरहप्रतियोग्युपादानकत्वविवक्षायां तादृशाज्ञानोपादानके घटादावव्याप्तिविरहेऽपि अनाद्यविद्यादावव्याप्तिर्दुर्वारैवेति वाच्यम्; यथा मण्याद्यसमवधानकालीनस्य कारणाभावप्रयुक्तस्य दाहाद्यभावस्य तत्तत्कालीनतत्तद्दाहाद्यभावत्वेन मण्याद्यप्रयुक्तत्वेऽपि तत्समवधानकालीनतदभावस्य दाहसामान्याभावत्वेन तत्प्रयोज्यत्वम् एवं घटादीनां स्वरूपेणावस्थितिविरहस्य ब्रह्मज्ञानप्राक्कालीनस्य तत्त्वेन तदप्रयोज्यत्वेऽपि स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तत्प्रयोज्यत्वस्य निष्प्रत्यूहत्वात्; 'विद्वान्नामरूपाद्विमुक्तः' इति श्रुत्या धनवान् सुखीत्यत्र सुखे धनप्रयोज्यत्वस्येव नामरूपसामान्यविमुक्तौ विद्वत्तायाः प्रयोजकत्वावगमात्। शुक्त्यादितत्त्वज्ञानात् इदानीं तदज्ञानतत्प्रयुक्तान्यतरन्नास्तीति सार्वजनीनानुभवाच्च। अस्मिन्पक्षे अभावद्वैताभ्युपगमाच्च न शङ्कान्तरावकाशः॥

अथ वा ज्ञानप्रयुक्तः अधिष्ठानतत्त्वज्ञानव्यापकः योऽवस्थितिसामान्यस्य स्वस्वीयसंस्कारान्यतरस्य अभावः तत्प्रतियोगित्वं तत्। भवति च या या अप्रामाण्यज्ञानादिशून्यसाक्षात्कारिप्रमा सा स्वसमानविषयकाज्ञानक्षणावृत्तिः। या या स्वजन्यपटुतरसंस्कारसहितोक्तप्रमा, सा

उक्ताज्ञानतत्संस्कारक्षणावृत्तिः । सहितान्तोपादानात् उक्तसहितान्यशुक्त्यादिप्रमाया उक्तसंस्कारक्षणवृत्तित्वेऽपि न व्यभिचारः । अत एव जीवन्मुक्तनिष्ठब्रह्मप्रमापि तादृशक्षणवृत्तिः । या या उक्तप्रमा सा स्वसमानविषयकाज्ञानतत्प्रयुक्ततत्संस्कारान्यतरवत्कालपूर्वभिन्ना । तथा च तादात्म्येन उक्तप्रमां प्रति स्वाधिकरणक्षणवृत्तित्वसंबन्धेन उक्ताज्ञानतत्संस्कारान्यतरस्याभावः उक्ताज्ञानप्रयुक्ततत्संस्कारान्यतरस्य स्वाधिकरणकालपूर्वत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावश्च व्यापक इति तादृशाभावप्रतियोगित्वस्य अज्ञानतत्प्रयुक्ततत्संस्कारेषु सत्त्वात् लक्षणसमन्वयः। तथा च तादात्म्यसंबन्धेन स्वजन्यपटुतरसंस्कारसहकृतप्रमां प्रति तादृशोक्तज्ञानं प्रति वा व्यापको योऽभावः तन्निरूपिता या स्वसमानविषयकत्वकालिकविशेषणतोभयसंबन्धावच्छिन्नप्रतियोगिता या च तादृशी स्वप्रयोजकाज्ञानसमानविषयकत्वस्वाधिकरणकालपूर्वत्वोभयसंबन्धावच्छिन्नप्रतियोगिता च तदन्यतरावच्छेदकस्वस्वीयसंस्कारान्यतरत्वकत्वमिति तन्निष्कर्षः । प्रतियोगिता च स्वव्यधिकरणसंबन्धाद्यनवच्छिन्ना ग्राह्या । प्रयोजनं तु स्वयमूह्यम् । एतेन दण्डादिनिवर्त्यस्य घटाद्यवस्थाविशेषस्य ज्ञानानिवर्त्यत्वेऽपि ज्ञानप्रयुक्तावस्थितिविशेषविरहमादायान्यतरवत्त्वेन लक्षणसमन्वयेऽर्थान्तरत्वापत्तिरिति परास्तम् ;

-यादृशज्ञानप्रयुक्तत्वं यदवस्थाविशेषस्य तादृशज्ञानस्य तदीया-
-वस्थान्तराधिकरणकालपूर्वत्वादिमत्त्वे उक्तलक्षणासंभवात्
तादृशकालपूर्वत्वादिशून्यत्वे च मिथ्यात्वस्यैव सिद्ध्या अर्था-
-न्तरानवकाशात्। न च या या साक्षात्कारिप्रमेत्यादि-
नियमो न संभवति, सन् घट इत्यादिप्रमाया आपातवे-
-दान्तजन्यप्रमायाश्च त्वन्मते ब्रह्मप्रमात्वेन स्वीकृतायाः स्वस-
-मानविषयकाज्ञानकालवृत्तित्वेन व्यभिचारात्, विशेष्यता-
-ख्यविषयतामादायैव हि ज्ञानाज्ञानयोः समानविषयकत्वं
त्वया वाच्यम् न तु प्रकारत्वमादाय, अखण्डार्थवेदान्त-
वाक्यजन्यज्ञानतन्निवर्तनीयाज्ञानयोः तदसंभवात्; तच्चो-
-क्तप्रमयोरप्यस्तीति वाच्यम्, सन् घट इत्यादिप्रमायाः घटा-
-द्युपहितसद्विषयकत्वेन मूलाज्ञानस्य च शुद्धविषयकत्वेन
समानविषयकत्वस्य सुदूरनिरस्तत्वात्। उक्तप्रमायां शुद्धस्य
भानेऽपि स्वनिरूपितविषयतानिरूपकत्वस्य संबन्धकोटौ निवे-
शात् नानुपपत्तिः। ज्ञानेच्छयोरिव ज्ञानाज्ञानयोरपि समाना-
-कारयोः विषयताभेदे मानाभावेन वृत्तिनिरूपिताकारताख्य-
विषयताया एवाज्ञाननिरूपितत्वाभ्युपगमात्। साक्षात्का-
रत्वं च परोक्षान्यज्ञानत्वादिरूपमन्यद्वा इत्यन्यदेतत्। एवं
च मूलाज्ञानीया या जीवत्वब्रह्मत्वाद्युपलक्षितविषयता तन्नि-
-रूपकत्वस्य सन् घट इत्यादिज्ञानादावसत्त्वात् न दोषः।

अधिकं शास्त्रारम्भसमर्थनटीकायां द्रष्टव्यम् । आपातवेदान्तजन्यप्रमायाश्च नापरोक्षत्वम्, तथात्वेऽपि नाप्रतिबद्धापरोक्षत्वं तदेव च लक्षणे निविष्टम् । यदि च चरमक्षणे स्वेतरस्येव स्वस्यापि ध्वंसत्वं स्वीक्रियते एकत्रापि रूपभेदेन ध्वंसत्वनिरूपितप्रतियोगित्वानुयोगित्वयोः संभवात् सकलदृश्यत्वेन हि तत्र प्रतियोगित्वं चरमतत्त्वज्ञानाश्रयतत्क्षणव्यक्तित्वेन अनुयोगित्वं समनियताभावैक्यमते गगनात्यन्ताभावस्य यो व्यधिकरणधर्मसंबन्धाद्यवच्छिन्नाभावः तादृशाभावत्वस्य गगनाद्यत्यन्ताभावप्रतियोग्यनुयोगिकस्य तार्किकादिभिरपि स्वीकारात् । न ह्यत्यन्ताभावत्वादेस्तथात्वेऽपि ध्वंसत्वादीनामतथात्वनियमे मानमस्ति । एवं च ज्ञानात् सर्वं दृश्यं नष्टमित्यादिविद्वदनुभवबलेन 'विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुतिबलेन च सर्वदृश्यप्रतियोगिकस्य चरमक्षणानुयोगिकस्य ध्वंसत्वस्यापि संभव इत्युच्यते तदा [1]ज्ञानप्रयुक्ततावच्छेदकीभूतध्वंसत्वप्रतियोगित्वम् उक्तलक्षणार्थ इति नार्थान्तराद्यवकाशः । न च ध्वंसस्य प्रतियोगिकालावृत्तित्वनियमात् इदमसंगतमिति वाच्यम्, (स्वाधिकरणकालपूर्वस्य) स्वाधिकरणकालसामान्यस्य स्वाधिकरणकालपूर्वकालसामा-

1. ज्ञानप्रयुक्तध्वंसप्रतियोगित्वमात्रोक्तौ ज्ञानप्रयुक्तेच्छाप्रागभावध्वंसरूपेच्छाप्रतियोगित्वमिच्छाप्रागभावे वर्तते इति दोषः ॥

न्यस्य वा न ध्वंसत्वविशिष्टाधिकरणत्वमिति वादिद्वय-सिद्धनियमेनैव निखिलातिप्रसङ्गवारणसंभवेन ध्वंसान्तरा-कल्पनलाघवेन च त्वदुक्तनियमस्यानादरणीयत्वात्। एतेन प्रतियोगिप्रागभावयोरिव प्रतियोगिध्वंसयोः अभेदोक्तिः मूकोऽहमितिवत् व्याहतेति निरस्तम्। प्रतियोगिदेशनियमाय तत्कारणतया कल्पनीयस्य प्रागभावस्य प्रतियोग्यभेदासंभवेऽपि चरमक्षणावच्छिन्नस्य स्वस्य ध्वंसत्वस्वीकारे व्याहत्ययोगात्। प्रतियोग्युत्पत्तेः पूर्वं स भविष्यतीत्यादिव्यवहारानुरोधेन प्रागभावाङ्गीकारेऽपि प्रतियोगिभेदकधर्मवत्तयैव तत्सिद्धेश्च। यद्यप्ययमस्मादुत्तर इत्यादिव्यवहारनिर्वाहकमुत्तरत्वं घटाधिकरणतदन्यसाधारणमङ्गीकार्यम्, तथापि नासौ घटादिध्वंसः, तथा सति घटादिनाशानन्तरं मासादिव्यवधानेऽपीदानीं घटो ध्वंसत इत्यादिप्रतीत्यापत्तेः। प्रकारान्तरेण तद्वारणे च महागौरवम्। अधिकं तु तत्त्वरत्नपरीक्षायामनुसंधेयम्। चरमक्षणस्य ध्वंस इतिवत् चरमक्षणः स्वध्वंस इत्यादिव्यवहारस्तु इष्ट एव। न चैवं जगति व्यवस्थामात्रोच्छेदः स्यादिति वाच्यम्, तत्तत्प्रमाणानुसारेण कल्पनीयायाः व्यवस्थायाः प्रमाणान्तराविरुद्धोक्तव्यवहाराभ्युपगमेनोच्छेदप्रसञ्जने बीजाभावात्। न ह्यत्र केनचित् प्रमाणेन विरोधोऽस्ति। समयान्तरकल्पनाविरुद्धव्यवहारस्यापि परि-

त्याज्यत्वे रूपं घटो ज्ञानमात्मेत्यादिव्यवहारस्यापि परित्या-ज्यतापत्तेः । चरमक्षणेन ध्वंसत इत्यादिव्यवहारोऽपीष्ट एव । तन्निष्ठः चरमक्षणसंबन्धः तद्ध्वंस इत्यपि केचित् । तत्रापि संबन्धस्य धर्मिस्वरूपत्वे उक्तरीतिरावश्यक्येव तदन्यत्वे तु अस्तु चरमक्षणतत्संबन्धयोरेव परस्परध्वंसरूपत्वमिति अ-न्यत्र विस्तरः । यदपि तस्यैव तद्ध्वंसत्वमनुपपन्नम्, अभेदे प्रतियोगिजन्याभावत्वरूपध्वंसत्वासंभवादिति, तदपि न, एवं सति रूपादेरपि रूप्यादिध्वंसत्वापत्तेः, भावभिन्नत्वनिवेशने घटादीनां परमते स्वप्रागभावध्वंसत्वानुपपत्तेश्च । तस्मात् अनुयोगिताविशेष एव ध्वंसत्वम् । तच्च कालविशेषावच्छे-देन स्वस्मिन्नपि नानुपपन्नम् । तादृशानुयोगिताविशेषस्यापि ध्वंसः तत्त्वज्ञानमेवेति न कोऽपि दोषः ॥

यद्वा ज्ञानप्रयुक्तोच्छेदप्रतियोगित्वं तत् । उच्छे-दश्च स्वस्वीयसंस्काराधिकरणकालनिष्ठः तादृशाधिकरणकाल-पूर्वत्वाभाव एव । यत्तु उक्तपूर्वत्वाभावस्य ध्वंसाद्यभावे तेनैव दृश्येन त्वदुक्तं व्याहतं स्यात्, भावे च तेनैव दृश्येनोक्तदूषणं स्यादिति, तन्न, ध्वंसाप्रतियोगिनोऽपि उक्ता-भावस्य तत्त्वज्ञानोत्तरमननुवृत्त्या व्याहत्यभावात् । तदुत्तर-काले दृश्यानुत्पादश्च, दृश्यनिमित्तस्य कर्मणः तदानीमभावेन दृश्योत्पादकसामग्रीविरहादेव । एतेन दृश्याधिकरणक्षणे

दृश्याधिकरणकालपूर्वत्वाभावः तत्क्षणस्य नित्यत्वेन तद्ध्वं-सस्य दृश्यक्षणासंबन्धित्वेन वा स्यात् तदुभयमपि अध्वं-भवीति निरस्तम्, तत्त्वज्ञानाधिकरणक्षणस्य ध्वंसाप्रतियो-गित्वरूपनित्यताया एव तत्पक्षे स्वीकृतत्वात् । न च ध्वंसाप्रतियोगित्वमात्रेण नित्यता, स्वाप्नव्याघ्रशुक्तिरजतादिषु उत्तरक्षणाननुवृत्तिव्यतिरिक्तस्य नाशस्यानभ्युपगमात् । य-त्त्वेवं सति ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं न स्यादिति, तन्न, उक्तरीत्या ज्ञाननिवर्त्यत्वस्य तत्रापि स्फुटत्वात् । पक्षान्तरे ज्ञानजन्यध्वंसप्रतियोगित्वरूपस्यापि तस्य सुवचत्वाच्च । उ-क्तोच्छेदस्य ध्वंसस्तु नानुमतः । यत्तु तत्पक्षे प्रतियोग्यु-न्मज्जनापत्तिरिति, तन्न, प्रागभावध्वंसरूपस्य घटस्य ध्वंसेऽपि प्रागभावोन्मज्जनादर्शनात् । घटध्वंसस्यापि प्रागभावध्वंस-रूपत्वात् न दोष इति चेत् तुल्यं प्रकृतेऽपि । एकस्यैव जन्य-त्वजनकत्वादिकं च नास्मत्संमतम् । तदभावेऽप्यनु-योगिताविशेषरूपध्वंसत्वस्य कालविशेषावच्छेदेन प्रतियो-गिनिष्ठतायाः उपपादितत्वात् । तेन नात्माश्रयत्वादेरव-काशः । प्रसिद्धं च प्राभाकरादिमते ज्ञानादिध्वंसस्याधि-करणात्मनः तत्त्वेनोत्तरकालवृत्तित्वम्, आत्मत्वादिना प्राक्का-लवृत्तित्वं च । यदपि ब्रह्माधिकरणक्षणे ब्रह्माधिकरणका-लपूर्वत्वाभावस्यापि त्वन्मते संभवेन ब्रह्मणोऽप्युच्छेदापत्तिः,

तस्य कालासंबन्धित्वे तु तुच्छत्वं स्यात्, 'सदेव' इत्यादिवाक्यस्य व्यावहारिकप्रामाण्यमपि न स्यात् इति, तन्न, तदन्योन्याभाववत् तदधिकरणकालस्य तदधिकरणकालपूर्वत्वानधिकरणत्वमुच्छेद इत्युक्तौ उक्तदोषाभावात् । ब्रह्मज्ञानोत्तरत्वस्यापि आविद्यकस्य शुद्धब्रह्मण्यभ्युपगमेन तस्य च ब्रह्माधिकरणकालतया तत्पूर्वत्वाभाववत्त्वस्य च तदत्यन्तभिन्ने काले काप्यभावात् ॥

केचित्तु उच्छेदस्य उच्छिद्यमानधर्मत्वात् यास्कपरिपठितेषु जायते अस्ति वर्धत इत्यादिषु षट्सु भावविकारेषु परस्परसामानाधिकरण्यस्योचितत्वेन उपचयोत्पत्त्यादियुक्ते दृश्यवर्गे विद्यमान एव चरमक्षणसंबन्धो ध्वंसः न तथाविधात्मनिष्ठ इति न तस्योच्छेदोपपत्तिः । एवं च दृश्याधिकरणक्षणनिष्ठः दृश्याधिकरणक्षणपूर्वत्वाभाव एव अधिकरणात्मा चरमदृश्यस्य ब्रह्मसाक्षात्काररूपस्य चरमो विकार एक एवाविद्यातत्प्रयुक्तचरमवृत्तीनां उच्छेदरूपः तन्तुनाश इव पटतदवयवतद्विकाराणाम् । न च उच्छेदस्यापि उच्छेदान्तरेण भाव्यम्, भावविकाराणां पृथक् सजातीयभावविकारान्तराभावात्, अन्यथा उत्पत्तेरप्युत्पत्त्यन्तरं तस्याप्युत्पत्त्यन्तरमिति अनवस्थापत्तेः इत्याहुः । न चैतन्मते दृश्यस्य ब्रह्मसाक्षात्काररूपस्य यः उच्छेदः तस्य किमधिकरणं दृश्यान्तरं ब्रह्म वा

आद्ये तस्याप्युच्छेद इति अनवस्था, द्वितीये साध्यासाध्ययोः सापेक्षनिरपेक्षयोश्च तयोरभेदासंभवः, स्वप्रकाशरूपस्य तस्य सर्वदैव स्फुरणेन दृश्यस्यावस्थानं कदापि न स्यात्, न हि त्वदभिमतषड्विकाराणाम् एकस्मिन् क्षणे स्थितिर्युक्ता, इष्टा वा, ब्रह्मसाक्षात्काररूपस्य दृश्यस्य स्वातिरिक्तोच्छेदकाभावेन उच्छेददौर्लभ्यम्, स्वस्य स्वोच्छेदकत्वं च आत्माश्रयादिना पराहतम्, अत एव सप्रपञ्चाविद्यायाश्चरमवृत्त्यात्मक एक एव चरमो विकारः, तस्य च न विकारापेक्षेत्यधिष्ठानमात्रपरिशेष इति निरस्तम्, तस्य चरमविकारस्य नित्यत्वापत्तेरिति वाच्यम्, उक्तसाक्षात्कारस्य स्वसमानकालीनस्वनिष्ठब्रह्मतादात्म्यादिरूपे जन्यतया कालोपाधौ तस्य चोक्ततत्त्वज्ञाने कालिकविशेषणतया वर्तमानत्वेन उक्तदूषणानवकाशात्। ब्रह्मसाक्षात्काररूपदृश्यस्य स्वनिष्ठदृश्याधिकरणकालपूर्वत्वाभावरूपोच्छेदं प्रति कारणत्वाभावेऽपि तत्सामग्र्या एव तत्प्रयोजकत्वसंभवात्। समानकालीनयोरपि प्रयोज्यप्रयोजकभावस्य मणिसमवधानोत्पत्तिकालीनदाहाभावाधिकरणतायां दृष्टत्वाच्च। अधिकरणात्मकाभाववादिप्राभाकरमतरीत्या स्वं प्रति रूपान्तरेण स्वस्य पूर्ववृत्तित्वसंभवाच्च। चरमविकारस्य ध्वंसाप्रतियोगित्वरूपनित्यत्वे इष्टापत्तेश्च। द्वितीयपक्षस्तु अनभ्युपगमपराहतः।

कालासंबन्धिनोऽपि गगनादेः पारमार्थिकत्वं न्यायवित्सं- मतम् । अत एव दीधितिकृता महाकालो घटवान् कालपरिमाणात् इत्यादौ साध्यतावच्छेदकसंबन्धसामान्ये यत्प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणीभूत- यत्किंचिद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशत्वं गगनत्वा- द्यवच्छिन्नप्रतियोगितायां प्रसिद्ध्यतीति उक्तम् । यत्त्वेवं सति कालवृत्तित्वघटितकारणत्वं न स्यादिति, तन्मन्दम्, कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणनिष्ठाभावी- यकारणतावच्छेदकत्वाभिमतसंबन्धावच्छिन्नप्रतियोगितानव- च्छेदकधर्मवत्त्वरूपनियतपूर्ववृत्तित्वं वा अनन्यथासिद्धत्वं वा न कालवृत्तिताघटितम्, तन्निर्वाह्यं वेति स्पष्टत्वात् । घटाभावे घटाभावोऽस्तीति प्रतीत्या तत्र तदधिकरणतास्वीकारेऽपि इदानीं महाकाल इत्यादिप्रात्यक्षिकप्रतीतेरभावेन प्रतीत्यन्त- रस्य च अन्यथापि संभवेन निर्युक्तिकस्य स्वस्मिन् स्वाधिक- रणत्वस्य स्वीकारे बीजाभावात् । गुरुत्वादेश्चोत्पत्त्याद्यन्यथा- नुपपत्त्या तदावश्यकता ॥

अथ वा ज्ञानप्रयुक्तस्वसमसत्ताकस्वनिष्ठतादात्म्यप्रतियो- गित्वावच्छिन्नप्रतियोगिताकाभावकत्वं तत्, समानसत्ता- कत्वं च ब्रह्मान्यविषयकज्ञानबाध्यत्वतदभाववत्कादाचि- त्कत्वान्यतररूपेण । नात एतदनुमानात् पूर्वं सत्ताभे-

दासिद्धावपि अप्रसिद्धविशेषणता । ज्ञानेन हि अज्ञानतत्परिणामादिदृश्यसामान्यस्यात्यन्ताभावः स्वोत्पत्तिद्वितीयक्षणावच्छिन्नः साध्यते, स चाभावः स्वान्यसर्वदृश्यविरोधी क्षणिकः । अत्र साध्यत्वं च प्रयोज्यतारूपमन्यद्वा इति । क्षणिकश्चायं न्यायविदामन्त्यशब्दवत् महाप्रलयवच्च । अतोऽस्य त्रैकालिकत्वमसिद्धम् । अस्तु वा त्रैकालिकत्वम् । उक्तक्षणप्रत्यासन्नस्त्वयं सर्वदृश्यविरोधी । यत्त्वत्यन्ताभावस्य हि स्वप्रतियोग्यादिना दैशिक एव विरोधो न कालिक इति, तन्न, कालिकसंबन्धेन प्रतियोग्यधिकरणे कालिकसंबन्धेनाभावस्य वृत्तावपि कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य कालिकसंबन्धेन प्रतियोग्यधिकरणे स्वरूपसंबन्धेनावर्तमानत्वरूपविरोधस्य सर्वसंमतत्वात् । 'विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुतिसिद्धस्योक्ताभावस्य पुरुषोत्प्रेक्षामात्रसिद्धत्वाभावाच्च । उक्तात्यन्ताभावस्य स्वान्यध्वंसप्रतियोगित्वानभ्युपगमेन च नानवस्थितध्वंसधारापत्तिः ॥

ज्ञानत्वव्याप्यधर्मावच्छिन्नजनकतानिरूपितजन्यतावद्ध्वंसप्रतियोगित्वं वा तत् । उत्तरज्ञानस्य पूर्वज्ञाननिवर्तकत्वं तु न ज्ञानत्वव्याप्यधर्मेण, किं त्विच्छादिसाधारणोदीच्यात्मगुणत्वेन चदीच्यत्वेन वेति न सिद्धसाधनादिः । नापि स्मृतित्वेन, ज्ञाननिवर्त्यसंस्कारेऽतिव्याप्तिः । स्मृतेः संस्कारनिवर्तकत्वे

मानाभावात्, स्मृतौ हि जातायां संस्कारो दृढो भवति इत्यनुभवसिद्धम् । दृढत्वं च समानविषयकसंस्कारानेकत्वम् इति अदोषः ॥

यत्त्वेवं सति स्मृतिधारापत्तिः, न चोद्बोधकासत्त्वात्तदुच्छेदः, तथा सति अन्वयव्यतिरेकाभ्यां उद्बोधकैरेव स्मृतिसंभवे संस्कारानुभवयोः स्मृतिकारणत्वविलोपापत्तेः । उपपादितं च संस्कारस्य सविषयत्वं तार्किकैः स्मृतिनाश्यत्वानुरोधात् । तथा हि— अथ भावनायाः अदृष्टवन्निर्विषयकत्वमेव युक्तम् । तत्तद्विशेष्यकतत्तत्प्रकारकस्मृतिं प्रति तत्तद्विशेष्यकत्वमेव तत्तत्प्रकारकनिश्चयस्य स्वजन्यभावनासंबन्धेन हेतुत्वात् नातिप्रसङ्गः । यत्त्वेवं सति घटांशे उपेक्षात्मकात् भूतलं घटवत् पटवच्च इति निश्चयात् घटांशेऽपि स्मृतिप्रसङ्गः, स्वजन्यभावनायाश्च पटांशे स्मृत्यनुरोधेन स्वीकारात् । न चोपेक्षान्यत्वस्य स्मृतिहेतुत्वावच्छेदकत्वानिवेशान्नायं दोषः, सर्वांशोपेक्षाजन्यानन्तभावनाभयेन उपेक्षान्यत्वेन भावनां प्रत्येव हेतुत्वादिति, तत्तुच्छम्, अनेकोपेक्षाभेदानां स्मृतिहेतुतावच्छेदके सर्वांशोपेक्षाभेदानां भावनाहेतुतावच्छेदके प्रवेशेनैव सामञ्जस्यात् इति । अत्र नव्याः समानाकारकफलस्य भावनानाशकत्वात् भावनायाः सविषयकत्वसिद्धिः । न च स्मृतिक्षणोत्पन्नसंस्कारस्य क्षणि-

कत्ववारणाय फलं स्वस्य वाच्यम्, तथा च तत्तद्व्य-क्तित्वेनैव नाशकत्वं युक्तमिति तद्भावनाजन्यचरमफलस्यैव तद्भावनानाशकत्वमस्त्विति वाच्यम्, जनकतया तत्तद्विशे-ष्यकतत्तत्प्रकारकस्मृतेः प्रतियोगितया तादृशभावनानाशहे-तुत्वस्यानुगतत्वात्। न च तत्पुरुषीयभावनासामान्यनाशं प्रति तत्पुरुषीयचरमस्मृतेस्तद्व्यक्तित्वेन चरमस्मृतिमात्रवृत्तिवै-जात्येन वा हेतुत्वमस्त्विति वाच्यम्; एवं सत्यजनितोपान्त्या-त्मकस्मृतिकानां भावनानां तत्त्रोपगमे ताभ्यः स्मृत्युत्पत्ति-प्रसङ्गात्। न चोद्बोधकाभावान्न तथा, सदृशसंबन्धात्मकय-द्यद्व्यक्तिज्ञानादेव यद्यत्पुरुषीयसंस्कारेण यद्यदर्थस्मृतिः तत्त-दर्थस्मृतौ तत्तद्व्यक्तिज्ञानत्वेनैव उद्बोधकत्वेन तत्र तस्य स-त्त्वात्, अन्यथा उद्बोधकस्यैव विशिष्य स्मृतिहेतुत्वेन अति-प्रसङ्गे अनुभवस्यापि तद्धेतुत्वं न स्यात्। प्रतिपुरुषं जगति चैक एव नित्यः संस्कारः स्यात् नैव वा स्यात् अति-प्रसङ्गस्योद्बोधकेनैव वारणात् इति॥

तन्न, स्मृत्या विजातीयसंस्कारोत्पत्तिवादिनः तवापि मते क्षणैकव्यवधानेन स्मृतिधारापत्तेः दुर्वारत्वात्। न चोद्बोध-कासत्त्वात् तदुच्छेदः, ममापि तुल्यत्वात्। एवं सति संस्का-रानुभवयोः स्मृतिहेतुता विलुप्येतेति चेत्, सत्यम्, कस्तवा-प्यत्र प्रतीकारः? अनुगतोद्बोधकस्थले अनुभवादिप्राक्कालोत्प-

षोद्बोधकबलात् स्मृतौ वारणाय तत्र संस्कारादिहेतुता वाच्येति तु ममापि तुल्यम् । एवं संस्कारस्य सविषयकत्वाभावेऽपि न क्षतिः । न वा स्मृतिसंस्कारयोः उक्तरीत्या नाश्यनाशकभावाभ्युपगमेऽपि संस्कारस्य सविषयकत्वसिद्धिः । स्मृतेः स्वसमानविषयकानुभवजन्यसंस्कारत्वावच्छिन्नं प्रत्येव नाशकतासंभवात् । न च तद्विशेष्यकतत्प्रकारकसंस्कारत्वापेक्षया तादृशानुभवजन्यसंस्कारत्वस्य गुरुतया न नाश्यतावच्छेदकत्वमिति वाच्यम्, एवं सति तत्प्रकारकत्वतद्विशेष्यकत्वादेः परस्परं विशेषणविशेष्यभावे विनिगमनाविरहेण अनेककार्यकारणभावकल्पनमपेक्ष्य तद्विशेष्यकतत्प्रकारकस्मृतिनाश्यतावच्छेदकवैजात्योपगमस्यैव उचिततया संस्कारसविषयकत्वस्य दूरनिरस्तत्वात् । उचितश्च शक्तेरिव शक्यतायाः अप्यतिरिक्तास्वीकारः । किं च यत्र घटपटसमूहालम्बनात्मकानुभवजन्य एक एव संस्कारः ततो मासाद्यनन्तरोत्पन्नसंबन्धिज्ञानादिरूपात् एकोद्बोधकात् एकस्य स्मृतिः तत्र पूर्वोत्पन्नसंस्कारनाशे अपरोद्बोधकस्यानुगतस्य समवधानेऽपि अपरस्मृत्यनुपपत्तिः । प्राचीनानुभवेन संस्कारद्वयोत्पत्त्युपगमे च एवंविधानन्तसंस्कारकल्पनागौरवमेव स्मृतिसंस्कारनाश्यनाशकभाववादिनां दुर्वारम् । तत्प्रकारकान्यसंस्कारनाशादौ तत्प्रकारकभेदादेः हेतुत्वं स्वीकृत्योक्तदोषवारणेऽपि गौरवमस्त्येव ।

विस्तरस्तु तर्कताण्डवखण्डने द्रष्टव्यः। न चैवं स्मरणोत्तरं स्मरणापत्तिः इष्टत्वात्। प्रत्युत तवैवोपेक्षात्मकस्मरणानन्तरं पुनर्यत्रानुगतोद्बोधकसमवधानम्, तत्र स्मरणानुपपत्तिः, संस्काराभावात्। न चेष्टापत्तिः अनुभवविरोधात्। उपेक्षान्यस्मृतेरेव नाशकत्वे स्ववचनविरोधो गौरवं च। न च यादृशस्मरणानन्तरं सत्यप्यनुगतोद्बोधके तत्र स्मरणापत्तिः त्वन्मते दुर्वारेति वाच्यम्, तत्र विनैव रोगादिकमनुगतोद्बोधकसत्त्वे स्मरणानुत्पादस्यैव असंप्रतिपत्तेः। संस्कारनाशकता च रोगादिसाधारणेन विजातीयत्वेनैवेति न काचिदनुपपत्तिः॥

साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं वा तत्, न च परोक्षभ्रमविषयेऽव्याप्तिः, सिद्धान्ते 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुत्या सर्वदृश्यप्रतियोगिकध्वंसस्य ब्रह्मसाक्षात्काराधीनत्वोपगमेन अव्याप्त्यनवकाशात्। ज्ञाननिवर्त्यत्वं च ज्ञाननिवर्त्यतदभिन्नतत्प्रयुक्तान्यतमत्वम्, पक्षवाज्ञानानामपि मूलाविद्यावस्थाविशेषरूपतया तदभेदस्य जीवेशभेदाद्यनाद्यन्तरवत् तत्प्रयुक्तत्वाद्वा नाव्याप्तिः। परमते अज्ञानान्तरस्य अज्ञानान्तराप्रयुक्तत्वेऽपि घटादाविवोक्ताज्ञानादावुक्तसाध्यस्य साधनीयत्वाददोषः। दृष्टान्तश्चापरोक्षभ्रमविषय एवेति न किंचित् अनुपपन्नम्। न च प्रवृत्तिप्रागभावेऽतिव्याप्तिः, प्राग-

भावानङ्गीकारेऽपि तत्स्थानीयावस्थाविशेषस्यावश्याभ्युपेय-त्वात् तत्रैवातिव्याप्तिः दुर्वारैवेति वाच्यम्, ध्वंसत्वाव-च्छिन्नायाः ज्ञाननिवर्त्यतायाः विवक्षितत्वात् । उपादानप्रत्य-क्षजन्यतावच्छेदिका च लाघवात् प्रवृत्तित्वरूपा जातिरेव । न च शुक्त्यादिस्पार्शनोत्तरमपि शुक्ताविदं रजतमिति चाक्षुषभ्रमस्य आनुभविकतया चाक्षुषत्वादिनैव तन्निवर्तकत्व-मावश्यकम्; तथा च दृष्टान्ते साध्यवैकल्यं इति वाच्यम्, गुञ्जापुञ्जे वह्निभ्रमस्य अधिष्ठानस्पार्शनोत्तरं अननुभवेन तादृ-शभ्रमजनकाज्ञानस्याधिष्ठानसाक्षात्कारसामान्यनिवर्त्यतायाः दुरपह्नवत्वेन तादृशवह्नेरेव दृष्टान्ततासंभवात् । नि-यमविशेषसहकृतसेतुदर्शनादिना पापनिवृत्तावपि तत्र न सेतुसाक्षात्कारत्वेन हेतुता किं तु चाक्षुषत्वेन, न च दृशेः साक्षात्कारसामान्यवाचितया साक्षात्कारत्वेनैव तन्निवर्त-कता संभवतीति वाच्यम्, साक्षात्कारमात्रे प्रयुक्तस्यापि दृशेः चाक्षुषे निरूढत्वात्, घटस्पार्शनवत्यप्यन्धे घटमयं पश्यतीति स्वारसिकप्रयोगादर्शनात्, तथा च 'सेतुं दृष्ट्वा' इत्यादौ लाघवसहकृतया निरूढ्या चाक्षुषत्वावच्छिन्नस्यैव दर्शिना प्रतिपादनात् अदोषः ॥

यद्वा इतरानपेक्षसाक्षात्कारनिवर्त्यत्वं तत्, उक्तस्थले च नियमविशेषसहकृतस्यैव ज्ञानस्य निवर्तकत्वम् इत्युक्तम् । न

च ब्रह्मज्ञानस्यापि श्रवणादिसहकृतस्यैव निवर्तकत्वात् बाधः, श्रवणादीनां साक्षात्कारजननमात्रोपक्षीणतया अविद्यानिवृत्तावनुपयोगात्। न चात्रापि तथा, तथा सति सेतुप्रान्ते दैवादागतस्य सेतुं पश्यतो यवनादेरपि दुरितनिवृत्त्यापत्तिरित्यादिकमाकरे व्यक्तम् । एवं च पूर्वोक्तविवक्षामन्तरापि प्रवृत्तिप्रागभावादौ नातिव्याप्तिः, अत्र कल्पे साक्षात्कारत्वेनेत्यत्र तृतीयार्थावच्छेद्यत्वस्य अनतिरिक्तवृत्तितारूपस्य विवक्षणात् शुक्त्यादिचाक्षुषत्वेन तन्निवर्त्यत्वेऽपि शुक्तिरूप्यादेः न तत्रापि साध्यवैकल्यम् , एतेन विपरीतज्ञानादिनाशस्य बाधादिनिश्चयत्वावच्छिन्नाप्रयोज्यत्वेऽपि तदत्यन्ताभावस्य तत्प्रयोज्यत्वात् विपरीतज्ञानादावतिव्याप्तिरिति निरस्तमिति संक्षेपः ॥

इति तृतीयमिथ्यात्वनिरुक्तिः ॥

—*—

## चतुर्थनिरुक्तिः ॥

स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम् ॥ तच्च स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वम्, नातः पौनरुक्त्यम्। न च तद्वति तदत्यन्ताभावाभ्युपगमे व्याहतिः, कपालादीनां घटाद्युपादानत्वानुपपत्तिश्चेति वाच्यम्, प्रतियोग्यत्यन्ताभावयोः विरोधासिद्ध्या व्याहतेरभावात्। स्वाभिन्नकार्यजनकतारूपोपादानत्वस्य स्वात्यन्ताभावसामानाधिकरण्यविघटनीयत्वाभावाच्च। न चोपादानतायां प्रागभाववत्त्वस्य तन्त्रतया तदभावे तदनुपपत्तिः अत्यन्ताभावाधिकरणे च न प्रागभावः विरोधात् इति वाच्यम्; विरोधस्यैवासिद्धेः। न च लोके क्वाप्यत्यन्ताभावाधिकरणे प्रागभावादर्शनात् विरोधः कल्प्यत इति वाच्यम्, तादृशप्रत्यक्षाभावेऽपि 'नेह नानास्ति किंचन' इत्यादिश्रुत्यादिनैव तद्बोधनात्। प्रमाणद्वयविरोधाधीनसंशयस्य च अनुमित्यविरोधित्वात्। विषमसत्ताकयोः समसत्ताकयोश्च भावाभावयोः अविरोधः प्रागुपपादितः। न चाविरोधे बाध्यबाधकभावानुपपत्तिः, तस्यान्यत्रोपपादितत्वात्। न च ब्रह्मण्यतिव्या-

प्तिः, तस्यात्यन्ताभावप्रतियोगित्वे मानाभावात्। न चासङ्ग-त्वमेव मानम्, सङ्गस्य मिथ्यात्वेन ब्रह्मणः तच्छून्यत्वेऽपि व्यवहारकालाबाध्यतत्तत्पदार्थसंबन्धवतो ब्रह्मणस्तन्निष्ठात्य-न्ताभावप्रतियोगित्वे तस्याप्रयोजकत्वात्, अन्यथा चेतनत्वेन ब्रह्मणः कर्माधीनभोगवत्त्वप्राकृतशरीरादिमत्त्वाद्यापत्तेः। तस्य प्राकृतशरीरराहित्यादिकं धर्मिग्राहकमानसिद्धमिति चेत्, तर्हि सत्यत्वेऽपि उक्तमिथ्यात्वाभावरूपे प्रदीयतां दृष्टिः। न चास-ति अतिव्याप्तिः, स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीय-मानत्वस्य विवक्षितत्वात्। तदर्थश्च सत्त्वावच्छिन्नस्वनिष्ठप्रका-रतानिरूपितविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वम्, स-त्तावच्छिन्नस्वाधिकरणताव्यापकस्वात्यन्ताभावकत्वम्, सत्त्व-समानाधिकरणस्वावच्छिन्नाधिकरणताव्यापकतावच्छेदकं य-द्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वं तद्धर्मवत्त्वं वा। सत्त्वं च अबाध्यत्वोपलक्षिततादात्म्यम्। न च शुद्धचितः इन्द्रियाद्यगोचरत्वात् तत्तादात्म्येन प्रतीयमानत्वं न संभव-तीति वाच्यम्, सत्त्वोपलक्षितस्यानैन्द्रियकत्वेऽपि शाब्दादि-वृत्तिविषयत्वाभ्युपगमेन असंभवानवकाशात्। तस्य वृत्त्यवि-षयत्वपक्षे तु अबाध्यत्वोपहिततादात्म्यमेव तत्। तादात्म्यमपि स्वस्मिन् स्वरूपसंबन्धेन वर्तत एव तेन न तत्राव्याप्तिः। न च प्रथमलक्षणे, अत्र रूप्यमिति अध्यस्तेऽव्याप्तिः, तत्रापीदं

तद्व्याप्यमित्यादिशाब्दादिज्ञानान्तरमादायैव लक्षणसमन्वयसंभवात् । कदापि कस्यापि यस्मिन्विषये तादृशज्ञानं नास्ति तत्राव्याप्तिरिति तु तादृशविषयासिद्ध्यैव न श्रद्धेयम् । यद्यपि द्वितीयतृतीययोः सत्त्वावच्छिन्नत्वाद्यनिवेशेऽपि नासत्यतिव्याप्तिः, स्तयाधिकरणत्वानिरूपकत्वात्, तथापि वृत्त्यनियामकसंबन्धेनापि मिथ्यात्वलाभाय अधिकरणतास्थाने यदि संबन्धित्वनिवेशः तदा विषयितासंबन्धेन स्वसंबन्धिनिष्ठाभावप्रतियोगिन्यलीके अतिव्याप्तिवारणाय तस्मिन् सत्त्वाश्रयत्वस्य द्वितीये तृतीये सत्त्वसामानाधिकरण्यविशिष्टवद्धर्मवत्त्वस्य च निवेशः । वस्तुतस्तु शुक्तिरूप्यादौ साध्यवैकल्यपरिहाराय स्वानिरूपितत्वस्वसजातीयनिरूपितत्वोभयाभावाधिकरणताया एव स्वाधिकरणतापदेन विवक्षणीयतया तुच्छेऽतिव्याप्तिवारणाय तन्निवेशः । सत्तावच्छिन्नत्वं च सत्त्वसामानाधिकरण्यरूपमधिकरणताविशेषणम् । यद्यपीदं तुच्छेऽतिप्रसक्तं तथापि नासत्यतिव्याप्तिवारणाय इदं विशेषणं किं तु शून्यवादापत्तिवारणाय । न च जगतोऽत्यन्तासत्त्वापत्तिः कालसंबन्धादेः पक्षविशेषणत्वानुसरणेन एतद्वारणसंभवात् । अस्तु तर्हि सत्तादात्म्यमेव लाघवात् पक्षविशेषणमिति चेत्, बाढम्, तथाप्यस्य साध्यस्य पूर्वोक्तसाध्यवैलक्षण्याय उक्तप्रकारादरः । तान्त्रिकैकदेशिनं

त्येव एतादृशन्यायप्रयोगानुसरणे च यथाश्रुतमेव रमणीयम्। न च प्रथमनिरुक्तौ 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति श्रुत्या असतः सत्त्वेन प्रतीत्यनुवादात् असत्यतिव्याप्तिः दुष्परिहरेति वाच्यम्, यतः 'सदेव' इत्यादिश्रुत्यर्थाभाव एव उक्तश्रुत्या प्रतिपाद्यते न तु असतः सत्त्वं विरोधात्। तथा हि— 'असदेवेदमग्र आसीत्' इत्यत्र कीदृशं सत्त्वं असत्त्वं वा विवक्षितम्, न तावत् अर्थक्रियाकारित्वतदभावौ, बौद्धमते कुर्वतः क्षणिकत्वेन सृष्टेः प्राक् तस्यासंभवात्। न च इदमात्मकस्य अर्थक्रियाकारिताशून्यस्य सृष्टिप्राक्कालवृत्तित्वप्रतिपादनात् नासङ्गतिरिति वाच्यम्, 'ततो वै सदजायत' इति तत्रार्थक्रियाकारित्वप्रतीत्यनुवादविरोधात्। अबाध्यस्य कालसंबन्धिन एव सद्रूपतया तत्रासत्त्वाभिधानस्य पारिभाषिकत्वापत्तेश्च। अत एव न कालसंबन्धित्वतदभावौ ते, कालासंबन्धिनि कालसंबन्धप्रतीत्यनुवादविरोधात्। एवंभूतस्य सतो न कार्यतादात्म्यादिकमपि कारणस्यैव कार्यतादात्म्यदर्शनात् कारणत्वे क्षणिकत्वापत्तेः शून्यकारणताया वक्तुमशक्यत्वात्। सन् घट इत्यादिप्रतीत्या सत्तादात्म्यसिद्धावपि असत्तादात्म्यकल्पकप्रमाणाभावात्। असदासीदित्याहार्यवृत्तेः संभवेऽपि लक्षणे अनाहार्यवृत्तिनिरूपितप्रकारताया एव निवेश्यत्वात् न कोऽपि

दोषः। यत्तु 'सदेव' इत्यादिश्रुत्यर्थाभावस्याप्यसत्त्वेन तस्य सत्त्वेनानुवादेऽपि असतः सत्त्वेन अनुवादो निरपवाद इति, तदसत्, बौद्धपरिकल्पितस्य सत्यप्रकालसत्त्वाभावस्य परोक्षेऽपि अनिर्वचनीयख्यातिपक्षे प्रातिभासिकत्वेन तत्र अन्यथाख्यातिपक्षे व्यावहारिकत्वेन च तुच्छत्वासिद्धेः। सत्यप्रकालसत्त्वाभावप्रकारप्रतीत्यनुवादेऽपि तादृशाभावस्य सत्त्वेन प्रतीतेः अननुवादाच्च ॥

इति चतुर्थमिथ्यात्वनिरुक्तिः ॥

## पञ्चमनिरुक्तिः ॥

सद्विविक्तत्वं वा मिथ्यात्वम्, सत्त्वं च प्रमाणसिद्धत्वम्; तथा च स्वसमानाधिकरणाभावाप्रतियोगित्वव्यापकविषयताकधीविषयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं पर्यवसितम्। गुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वपक्षे उक्तद्धीविषयत्वापेक्षया तादृशाभावाप्रतियोगित्वस्य गुरुत्वेन अभावप्रतियोगितावच्छेदकत्वायोगात् तदवच्छिन्नप्रतियोगिताकभेदानिवेशः। स्वसमानाधिकरणाभावप्रतियोगितामात्रस्य साधने पौनरुक्त्यम्। दोषाजन्यज्ञानविषयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं वा तदर्थः। यद्यप्यत्र दोषत्वं न जातिः, नापि अखण्डोपाधिः मानाभावात्। नापि भ्रमजनकत्वं दोषासहकृतस्य भ्रमजनकस्यैव प्रमां प्रति जनकत्वात्। भ्रमत्वावच्छिन्नोत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नोत्पत्तिप्रयोज्योत्पत्तिकत्वाभाववत्त्वं वा प्रमात्वमित्यपि न। लाघवात् भ्रमान्यत्वस्यैव निवेशयितुम् उचितत्वात्। न वा भ्रमत्वं सुवचम्, बाधितविषयकज्ञानत्वादिरूपस्य तस्य बाधितत्वरूपमिथ्यात्वघटितत्वेन अन्योन्याश्रयादिप्रसङ्गात्,

तथापि अज्ञानमेवात्र दोषशब्देन विवक्षितम् । एवं च स्वभिन्नविषयकाज्ञानप्रयुक्तधीविषयत्वं पर्यवसितम् । भवति च शुक्तिरूप्यादिः स्वभिन्नरजतादिभेदविशिष्टशुक्त्यादिविषयकाज्ञानप्रयुक्तधीविषयः । एवं वियदादिकमपि सिद्धान्ते स्वभिन्नब्रह्मविषयकमूलाज्ञानप्रयुक्तधीविषयः इति लक्षणसमन्वयः । स्वभिन्नत्वस्थाने स्वाविषयकत्वं वा निवेश्यम् । तेनेदं रजतं सदित्यादिप्रत्यये शुद्धस्य विषयत्वेऽपि न क्षतिः । न चार्थान्तरता, शुद्धं ब्रह्मैव जगदुपादानम् अविद्या तन्निमित्तमात्रमिति मते अविद्याया दोषविधया कारणत्वे पर्यवसानात् । यत्तु तत्त्वमस्यादिवाक्योत्थतत्त्वज्ञानस्य ब्रह्मातिरिक्ताभेदविषयकत्वे भ्रमत्वं नो चेत् प्रत्यक्षावान्तरवाक्यादिना ज्ञातब्रह्मैकविषयकत्वेन प्रामाण्यानुपपत्तिः, अनवगतार्थविषयकज्ञानत्वस्यैव त्वन्मते प्रामाण्यरूपत्वादिति, तन्न, स्वप्रकाशस्यापि जीवत्वब्रह्मत्वादिनिरूपिताज्ञानविषयताशालितया वेदान्तानां अज्ञातज्ञापकत्वलक्षणप्रामाण्यस्य निष्प्रत्यूहत्वात् । शुद्धब्रह्मणो वृत्तिव्याप्यत्वमते एव तल्लक्षणमिति ॥

इति पञ्चममिथ्यात्वनिरुक्तिः ॥

——*——

## षष्ठनिरुक्तिः ॥

---

ननूक्तमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वापातः, एकस्मिन् धर्मिणि प्रसक्तयोः विरुद्धधर्मयोः एकमिथ्यात्वे अपरसत्यत्वनियमात् मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तिः, उभयथाप्यद्वैतव्याघात इति चेत्, न, विरुद्धयोः यदेकं मिथ्या तदपेक्षया तदन्यदधिकसत्ताकमिति नियमे व्यावहारिकमिथ्यात्वाश्रये शुक्तिरूप्यादौ तात्त्विकसत्यत्वाभावेन व्यभिचारात् । अथ शुक्तिरूप्यं न मिथ्यामिथ्यात्वाश्रयः, मिथ्यात्वाविरुद्धतात्त्विकसत्यत्वानाधिकरणत्वात्, यत् यद्विरुद्धस्य तात्त्विकस्यानधिकरणम्, तत् तस्य मिथ्याभूतस्यानधिकरणम्, यथा गोत्वविरुद्धस्य तात्त्विकस्य गोत्वाभावस्यानधिकरणं मिथ्याभूतस्य गोत्वस्यानाश्रयश्च गौः तथा च शुक्तिरूप्यमिथ्यात्वस्य तात्त्विकत्वेन रूप्ये हेतोरभावात् न व्यभिचार इति चेत्, न, व्याप्यतावच्छेदककोटिप्रविष्टविरोधिप्रतियोगिसमर्पकेन यच्छब्देन तात्त्विकगोत्वपरिग्रहे तस्य मिथ्याभूतस्याप्रसिद्धया सहचारग्रहासंभवात् । न च मिथ्याभूतस्य तस्य अप्रसिद्धावपि भेदप्रसिद्धिः सुलभैव, असत्प्रतियोगिकस्यापि भेदस्य अङ्गीकारात्, मिथ्यात्वावच्छिन्नतन्निष्ठप्रतियोगितावच्छेदक-

त्विकभेदवत्त्वं वा व्यापकत्वेन विवक्षितम् , अतो न कोऽपि दोष इति वाच्यम् , आरोपिताश्वतादात्म्यवति गर्दभे वर्तमानस्य धर्ममात्रस्य आरोपिताश्वतादात्म्याविरोधितया तद्विरोधिधर्म- ....तस्मिन् मिथ्याभूताश्वतादात्म्यावच्छिन्नत्वस्य मन्मते अभावेन व्यभिचारात् । न च व्याप्यकोटिस्थं यत्पदं यद्धर्मविशिष्टपरम् , एवं च तात्त्विकस्य यद्धर्मविशिष्टस्य विरोधि यत् तात्त्विकं तदनधिकरणत्वस्य व्याप्यतापर्यवसानात् न दोष इति वाच्यम् , मन्मते मिथ्याभूतगोत्ववद्भेदरूपव्यापकशून्ये गवादौ तात्त्विकगोत्वविरुद्धस्य तात्त्विकगोत्वाभावस्य अभावसत्त्वेन व्यभिचारात् । यदि च तात्त्विकगोत्वविरुद्धशून्यत्वमात्रं हेतुः, इतरांशस्य व्यर्थत्वात् इत्युच्येत, तदा मन्मते तात्त्विकगोत्वादिव्यक्तेः अप्रसिद्धत्वेन सर्वस्यैव धर्मस्य तद्विरुद्धतया हेत्वसिद्धिः दुर्वारैव । अथोच्येत तात्त्विकत्वमत्र धर्मिज्ञानाबाध्यत्वम् , एवं च धर्मिज्ञानाबाध्यस्य यद्धर्मविशिष्टस्य विरोध्यनधिकरणं यत् तत् मिथ्यात्वेन तद्धर्मविशिष्टानधिकरणमिति नियमे न दोष इति, तदपि न, उक्तरीत्या मन्मते गवादौ व्यभिचारस्य दुर्वारत्वात् । व्यापककोटिनिविष्टं मिथ्यात्वं यदि धर्मिज्ञानबाध्यत्वरूपम् तदा सिद्धसाधनतैव पुरः स्फुरन्ती त्वदीयवाचाटतामभिरुणद्धि ॥

एतावानेवायं ग्रन्थः उपलब्धः ॥